# वीरप्रतापनाटकम्

वैजयन्तीटीकोपेतम्

श्रीसर्वतन्त्रस्वतन्त्रैस्साहित्याचार्यैस्सोलनराजगुरुभि-
र्महामहोपाध्यायविद्यावारिध्यादिपदालङ्कृतैः
पण्डितमथुराप्रसाददीक्षितै-
र्विरचितम्

तच्चेदं
लवपुरीयपञ्जाबसंस्कृतपुस्तकालयाध्यक्षैः
मोतीलालबनारसीदासमहोदयैः
स्वीये 'बाम्बेसंस्कृत' इति नाम्नि
मुद्रणालये मुद्रापयित्वा
प्रकाशितम्

प्रथमं संस्करणम् १००० ] १९३७ [ मूल्यं रूप्यकद्वयम्

श्रीः

इदं वीरप्रतापनाटकमार्यपतिमहाराणाप्रतापसिंहस्येति
'रत्नं समागच्छतु काञ्चनेन' इति सिद्धान्तमाश्रित्य
परमसदाचारसंपन्नस्य शौर्यौदार्यसहिष्णुतादि-
गुणयुक्तस्य दानवदलदलनप्रमारवशावतंसस्य
सम्यगधीतव्याकरणसाहित्यशास्त्रस्य सं-
स्कृतविपश्चित आदर्शक्षत्रियस्य श्री-
धर्ममार्तण्डराजाधिराजदुर्गा-
सिंहस्य करकमले
समर्प्यते

सर्वतन्त्रस्वतन्त्र-विद्यावारिधि-
महामहोपाध्याय-मथुराप्रसाददीक्षितः

## FOREWORD

The following pages represent the labours of a modern writer in the field of Sanskrit Drama. Though the attempt may not claim to be unique, even in these days of comparative neglect of ancient Indian language and classics, it certainly reflects a great credit on the author. The earliest history of the growth of drama in the pre-christian centuries in India is shrouded in mystery, but from a survey of its subsequent history it appears that Indian drama, unlike Greek drama in the early ages or Elizabethan drama in mediaeval England, had its own course of evolution and developed its own canons and technique. Several varieties of dramatic composition, both Rupakas and Uparupakas, are recognised and illustrated in Sanskrit literature, and though these cover a wide area of subjects and constructive art and though some of them do depart from the standard fixed by literary traditions, they can in no wise be described as the expression of an unrestricted freedom of the author's imagination. Present-day compositions have to conform to the canons of dramatic art to an even greater extent. The genius of the author can find scope for exhibiting itself, not usually in over-riding these bonds of traditional propriety but in utilising them as instruments of a larger self-expression.

The author, MM Pandit Mathura Prasad Dīksita, writes Sanskrit with a facile pen and commands a style, which combines elegance with power He has tried to depict in the present work the extraordinary qualities of the great Rajput hero, Rana Pratāp Sinha of Mewar, and there is no doubt that he has greatly suceeded in making his picture as vivid as possible The name of Rana Pratāp has been a household word, not only in Rajputana but in the whole of educated India, thanks to the immortal researches of the late lamented Col Tod and of his illustrious followers His patriotism, his love of freedom, the nobility and dignity of his moral character, his great bravery, his unbounded zeal and religious fervour, and above all his unusual sacrifices in the cause of his country and countrymen—these are the never failing sources of inspiration to patriotic youths and have as a matter of fact fired the imagination of hosts of writers and readers of north Indian vernaculars The author has done well in making Sanskrit his medium, as it is calculated to have the effect of enriching modern Sanskrit drama as well as of making available the story of the great hero to a wider circle of young Indian readers I hope the work will have the publicity and appreciation it deserves

Benares
November, 1937

**Gopi Nath Kaviraj**

श्रीशश्शरणम्

श्रीमत्प्रतापचरितन्नाटकेनोपवर्णितम् ।
विलोक्यामोमुदं काव्यगौरवाद्यत्पुरातनम् ॥ १ ॥
नूलङ्कृत्वेव कविना प्रत्यक्षामिव दर्शितम् ।
मन्ये भवेदुपकृतिर्म्महती छात्रसंसदि ॥ २ ॥
महाविद्यालयाध्यक्षैरालोच्यास्य निवेशनात् ।
परीक्ष्यग्रन्थनिचयेऽध्ययनादस्य सर्वथा ॥ ३ ॥
नव्योत्साहवतां देशोद्धृतयेऽधिष्ठितात्मनाम् ।
अन्तेनिवसतामेतन्नियतञ्जनयेन्मुदम् ॥ ४ ॥
तस्मादेतस्य सर्वत्र प्रचाराय मनीषिभिः ।
यतितव्यमिति प्रह्वो मुकुन्दो भृशमीहते ॥ ५ ॥

महामहोपाध्याय बक्शी श्री मुकुन्द झा, काशी ।

# प्राक्कथनम्

अस्तीद वीरप्रतापनाटक परमशौर्यशालिन शिशोदियाकुलोद्भूतस्य श्रीमहाराणाप्रतापनायकस्य। स च प्रताप कीदृक् शौर्यसाहससहिष्णुता-गुणसपन्न आसीदिति नातितिरोहितं भारतीयप्रज्ञावताम्। आर्यपतिना येन विराट्साम्राज्याधिपतेरकबरस्याधिपत्यमस्वीकृत्य सुरक्षिताऽऽर्यमर्यादा, स्थिरीकृतं च स्वाधिपत्यमित्यादि सकलमपि वृत्तान्तमस्मिन्नाटके उप-निबद्धम्। नाधुनिकसमये प्रायशो भरतप्रणीतनियमानुबद्धानि नाटकानि विद्वद्भिर्निर्मीयन्ते इति न तानि नाटकश्रेण्या परिगण्यन्ते, अत एव कतिपयै. पाश्चात्यकोविदैर्नाधुनिकसमये सस्कृतभाषायां महाकाव्यानि नाटकानि वा भारतीयबुधैर्निर्मीयन्त इति संस्कृतभाषाया अकिञ्चित्करता समर्थमानैरिदं नाटकमवलोक्य सतुष्यताम्। प्रमुद्यता च भरतप्रणीत-नियमानुसृत्यैव निर्मित साम्प्रतिकालीन वीररसात्ममिदं नाटकमित्यवगत्य गुणग्राहिभिर्विपश्चिद्भिश्च।

प्रार्थयामहे च सानुनयं विदुष., यद् 'गच्छत. स्खलन क्वापि धावत. पतन क्वचित्' इति सिद्धसिद्धान्तेनास्मत्प्रमादात्संशोधकदृष्टिदोषान्मुद्रकयन्त्र-दोषाद्वा यदि क्वचिदशुद्धमापतितं स्यात्तद्विद्वद्भिः कृपया संशोधनीयम्।

एतत्सशोधने लाभपुरीयशीतलासंस्कृतविद्यालये विविधशास्त्राध्या-पकाना व्याकरणसाहित्याचार्याणा पं० श्रीधरानन्दशास्त्रिणाम्, एम्०ए०, एम्० ओ० एल्० पदवीविभूषिताना पं० जगदीशशास्त्रिणा च परम-माभारिणो वयम्, यैर्महता परिश्रमेणेद सशोधितमिति

साहित्यरसिकानां सेवका महामहोपाध्याय-विद्यावारिधि-

**मथुराप्रसाददीक्षिताः**

# शुद्धिपत्रम्

| शुद्धम् | अशुद्धम् | पृ० | पं० |
|---|---|---|---|
| विनाशने | विनाशन | १ | १२ |
| दीक्षितेन | दीक्षित | ६ | १ |
| विपक्षिणा | विपक्षिण | ८ | २२ |
| कलैक | फलैक | ११ | २४ |
| प्रतिबन्धक | बन्धक | १४ | १७ |
| कीदृक् | ० | १५ | २४ |
| ० | युद्धेषु | १७ | १४ |
| तासा | तेषा | २४ | १० |
| लुब्धन्तीं | लुब्धन्ती | ३० | २ |
| दस्याश्चो | दस्य चो | ३० | ८ |
| चर्माव | चर्मवि | ३१ | १९ |
| मेवेति | मेवैति | ३२ | २७ |
| दौवारिक ! | दावारिक ! | ३६ | १ |
| शुद्ध | मिश्र | ३८ | २५ |
| वत्त्व | वस्त्व | ३९ | २१ |
| भेदप्रयोग | भेद प्रयोग | ४८ | २७ |
| भ्राता | पितुर्भ्राता | ४९ | २१ |
| राज्य | राज | ४९ | २५ |
| नित्याम् | नित्यम् | ५० | ७ |
| परावर्तयितु | परावर्तितुं | ५० | ८ |
| सारिणी | सारिणा | ५० | ११ |
| चातुर्वर्ण्य | चातुर्वर्णय | ५० | १२ |
| बोध्यस्य | बोधस्य | ५० | १४ |
| अभ्याशो | भ्यासो | ५० | २३ |
| अभ्याशो | भ्यासो | ५० | २४ |
| चेव | चैव | ५५ | ५ |
| मत्थगाउ | मत्थगउ | ५७ | ६ |
| उज्ज्व | उज्व | ५९ | ७ |
| पितृ | पितामह | ५९ | १९ |
| परिक्रमे | परिक्रम | ६१ | ४ |
| स्थिततया | स्थितया | ६६ | २० |
| परम | पर | ७१ | २६ |
| स्वभूमि | स्वभमि | ७१ | २६ |
| त्वत्कृते | त्वकृते | ७१ | ४ |
| आक्रामेत् | आक्रमेत् | ८० | २१ |
| सैन्याना | सैन्यानामिव | ८२ | २२ |
| शत्रुराजाना | शत्रुराज्ञा | ८६ | २६ |
| बुद्ध्या | बुध्या | ८८ | २७ |
| स्वविपक्ष | प्रतापपक्ष | ८९ | १८ |
| मानस्यैव | मानस्येव | ९० | १८ |
| ओदनादे | अदनादे | ९९ | ११ |
| जीवनौषधं | जीवितकालो | ९९ | १५ |
| पश्चात्तापरूप | पश्चाद्रूप | ९९ | १९ |
| कूपा | कूप | १०५ | १५ |
| दिरणा | दिस्सा | १०७ | ५२ |

| शुद्ध | अशुद्ध | पृ० | पं० |
|---|---|---|---|
| करिणाश्रा | करणश्रा | १०८ | ३ |
| माण | मणि | १०८ | ६ |
| युक्तमेव | युक्तमिव | १०८ | १४ |
| दण्ड. | दड | ११० | २३ |
| जीवइ | जीवहि | ११२ | १७ |
| आहेडण | आहेउण | ११५ | ६ |
| दुवे | दुब्वे | ११५ | २१ |
| अस्से | अस्स | ११५ | २१ |
| मस्तक | मस्तको | ११६ | ८ |
| भिल्ल | भिल्ली | ११६ | ५ |
| सो | स | ११७ | २ |
| चेव | चैव | ११७ | १७ |
| यस्य स त | यस्य स | १२१ | २३ |
| तम् | तथा | १२२ | २४ |
| तस्मिन्नहते | तस्मिन् हते | १२६ | १२ |
| सिंहोऽपि | विजयोऽपि | १२७ | १७ |
| मानेन | माने | १३० | १७ |
| व्यापारा | व्यपारा | १४६ | १६ |
| मोत्तम | मुत्तम | १५२ | १७ |
| आक्रामेत् | आक्रमेत् | १५६ | ६ |
| निर्गम | निगम | १६० | १ |
| निहते | निहिते | १६६ | १२ |
| पतिंचर | पतिं | १७८ | २ |
| ससर्गेण | ससर्गेन | १८५ | २३ |
| सा | स | १८६ | २१ |
| मङ्क्षा | मङ्क्षा | १६१ | १२ |
| प्रदेशे | प्रदेशे | १६५ | २० |
| प्रोल्लासिश्री | प्रोल्लासिश्रि | १६६ | १ |
| मेत | मस्म | १६८ | २५ |
| ष्वपि | ष्वेव | २०० | २१ |
| कथैव का | कथैव | २०० | २१ |
| गतो | गतौ | २०१ | ७ |
| दृष्टान्तेन | दृष्टान्ते | २११ | २५ |
| तस्मि | तस्मिं | २१२ | २३ |
| एव | तव | २१३ | १३ |
| विजृम्भायते | विजृम्भते | २१३ | २० |
| शुद्धमनसा | शुद्धमनस | २१४ | १२ |
| यवनाधि | यवनवि | २१४ | २६ |
| तन्त्रताया | तन्त्रतायाम् | २२० | १३ |

श्रीः

# वीरप्रतापनाटकम् ।

## प्रथमोऽङ्कः ।

सूत्रधारः—

या प्रत्यूहपतङ्गसङ्घदहने दीप्रप्रदीपायते
या चिन्तामणिकल्पपद्ममणिभाप्रोद्यत्कदम्बायते ।
या चाज्ञानतमःसमूहहरणे भास्वन्मयूखायते
सा विष्णोश्चरणारविन्दसुषमा विष्वक् प्रतापायते ॥१॥

---

येषां वचनमयूखैर्विकाशमायान्ति हृदयकमलानि ।
तैर्मम हृदयनिवासादज्ञानतमो निरास्येत ॥ १ ॥

अविगीतशिष्टाचारविषयतया नान्दीरूपेण मङ्गलमारभते—**या प्रत्यूह**-इत्यादि । या, प्रत्यूहा विघ्ना, पतङ्गा इव, तेषां सङ्घस्य समूहस्य, दहने सर्वतो-भावेन विनाशने, देदीप्यमानप्रदीप इव आचरति, भासते । देदीप्यमानप्रदीप-स्यैव पतङ्गसङ्घदहने सामर्थ्यमिति कृत्वा दीप्रेत्युक्तम् । तथा या, चिन्तामणि-कल्पस्य पद्ममणेर्या भा दीप्तिस्तस्या प्रोद्यत्कदम्ब इव आचरति । तथा या च, अज्ञानरूपस्य तमःसमूहस्य हरणे, भास्वन्मयूखायते सूर्यकिरणवत्प्रकाशते । सा, विष्वक् चतसृषु दिक्षु, न तु स्वल्पदेशावस्थायिनी, एतेन तस्या अनि-र्वचनीयदेशावस्थायित्वं प्रगाढतेजोवैशिष्ट्यं च व्यज्यते । विष्णोश्चरणार विन्दयोः, सुषमा-अत्युत्कृष्टतमा शोभा, 'सुषमा परमा शोभा' इत्यमरः । प्रतापा-यते-प्रताप इव आचरति । अत्र प्रथमचरणेन ऊर्ध्वप्रसारित्वं, द्वितीय-

चरणेन तिर्यक्प्रसारित्व, तृतीयचरणेन अध प्रसारित्व बोध्यते, तथैव तेषा स्वभावात्, विष्णुपदसुषमायाश्च सर्वत प्रसारित्वम्। अत्र प्रदीपसूर्ययोरुष्णस्वभावाच्चरणसुषमायाश्च शैत्यबोधनाय चरणाब्जयोरभेदप्रतिपादनम्। **प्रतापायते** इति। प्रताप -सर्वराजाना मुकुटभूत आर्यपतिर्यो महाराणाप्रताप, तद्वदाचरति। प्रतापोऽपि प्रत्यूहस्वरूपस्य अकबरसैन्यपतङ्गसमूहस्य विनाशने देदीप्यमानप्रदीप इवाचरति। उक्त हि मनुना "बालोऽपि नावमन्तव्यो मनुष्य इति भूमिप। महती देवता ह्येषा नररूपेण तिष्ठति'। ७। ८। एकमेव दहत्यग्निर्नर दुरुपसर्पिणम्। कुल दहति राजाग्नि सपशुद्रव्यसञ्चयम्।"७।९। इति चिन्तामणे मातृश्यप्रतिपादनादभिमतस्वभूमिस्वातन्त्र्यलाभो बोध्यते। या अज्ञानतम समूहहरणे भास्वन्मयूखायते। एव च हल्दीघाटिकयुद्धसघट्टे सैन्यतो बहिर्गमन एव देशरक्षेत्यादिज्ञानोदयात्स्वत एव भास्वन्मयूखायित्वम्। मनुनाऽपि राज्ञ सूर्यसमत्वमुक्तम् 'तपत्यादित्यवच्चैष चक्षूषि च मनासि च। न चैन भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्'। ७। ६॥ इति। अत्र पतङ्गसङ्घसदृशस्य, अकबरसैन्यदहनस्य, अभिमतस्वातन्त्र्यप्राप्ते, हल्दीघाटिकायुद्धसघट्टे बहिर्गमनस्य च वर्णनीयग्रन्थविषयस्य व्यङ्ग्यरूपेण प्रतिपादनात् बीजरूप वस्तु व्यज्यते।

ननु "पूर्वरङ्ग विधायैव सूत्रधारो निवर्तते। प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्तत। ६। २६॥ दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयो। सूचयेद्वस्तु बीज वा मुख पात्रमथापि वा। ६। २७॥" एतेन "सूत्रधार पूर्वरङ्ग विधाय निवर्तेत, तदनन्तर स्थापक प्रविश्य बीजादि वस्तु सूचयेत्" इति बोध्यते, इह तु पूर्वरङ्गमनिरूप्य स्थापककरणीय बीजवस्तुसूचन सूत्रधारेण क्रियते तत्कथ युज्यते, इति चेच्छृणु। अत्र प्रतिपादनीयग्रन्थविषयो व्यज्यते एव, न तु स्फुटतया पात्रप्रवेशयोग्यत्वेन सूच्यते। अत एव न तथाभूतमनुद्बुद्धबीजमादाय पात्रप्रवेश कार्यते। ननु पूर्वरङ्गमप्रदर्श्य कथ पूर्वमेव नान्दी उपनिबध्यते। तत्राय नियम –'पूर्वरङ्ग विधायैव सूत्रधारो निवर्तते' अत्र विधायैवेत्यत्रैवकारेण अयोगव्यवच्छेदार्थप्रबोधनात्सूत्रधारोऽवश्यं पूर्वरङ्ग विदध्यादिति प्रतिपाद्यते। पुनस्तत्रैव पूर्वरङ्गलक्षणनिरूपणावसरे तेनैव "यन्नाट्यवस्तुन पूर्व रङ्गविघ्नोपशान्तये। कुशीलवा प्रकु-

र्वन्ति पूर्वरङ्ग स उच्यते" इत्येव कुशीलवै क्रियमाणस्यैव पूर्वरङ्गत्वमुक्तम्। सूत्रधारकृतस्य तु पूर्वरङ्गतैव नास्ति तत्कथ युज्यते, कथ वा कुशीलवसूत्र-धारकरणीयत्वे पूर्वापरविरोध परिह्रियते। अत्रैवमवगन्तव्यम् सूत्रधारस्थापक-कुशीलवनटाना कार्याणि सूत्रधार एव कुर्यात्, तथा सत्येव नाटके रोचकता सपद्यते, अन्यथाकरणे प्रत्युत सामाजिकाना वैमुख्य स्यात्, सामाजिका विचारयिष्यन्ति किमर्थमय पूर्वरङ्गमात्र नान्दीमात्र वा कृत्वा निवृत्त, यदि प्ररोचना प्रस्तावना वा अयमेव कुर्यात्तदापि शोभनमेव भवेत्। वस्तुतस्तु सामाजिकाना वैमुख्योत्पादकत्व, सहृदयहृदयोद्वेजकत्वं वा दृश्यश्रव्यकाव्येषु दोषकताबीजम्। तद्बीज यदि सूत्रधारमात्रेण नान्दीप्रस्तावनादिके सकले कार्ये कृते न प्रतिभासते तदा न काऽपि क्षति। अत एव प्रायश समस्तैरपि कविभि सूत्रधारेणैव नान्दीप्रस्तावनादिसकलकार्यसंपादन कार्यते। न चापि क्वचिदपि पूर्वरङ्गनान्द्यौ पार्थक्येन क्रियमाणे दृश्येते। अत्रेदं तत्त्वम्—बहुभि कुशीलवादिभि सहितेन सूत्रधारेण पूर्वरङ्ग क्रियते, तत्फल रङ्ग-विघ्नोपशान्तिरेव। तस्य पूर्वरङ्गस्य प्रत्याहारादिकानि द्वाविंशत्यङ्गानि। तत्र नान्दी-रूपमङ्गमवश्य सूत्रधारेण कर्तव्यम्, तत्फलमपि विघ्नोपशान्तिरेव। एव च 'तथाप्यवश्य कर्तव्या नान्दी विघ्नोपशान्तये' इति आवश्यकेन तत्करणेनैव विघ्नोपशान्तौ तदर्थं क्रियमाण पूर्वरङ्गोऽन्यथासिद्ध। अत एव न तथारूपेण कैश्चिदपि कविभि प्रयुज्यते। यदपि सूत्रधारकुशीलवै क्रियमाणे विरोध-प्रदर्शन क्रियते तत्राप्येवं वक्तव्यम्-कुशीलवै सहितेनैव सूत्रधारेण पूर्वरङ्ग क्रियते। यदि कुशीलवा केनापि कारणेन नोपस्थिता भवेयु-स्तदा सूत्रधारस्तु अवश्यमेव एकेन द्वाभ्या वा कुशीलवाभ्या पूर्वरङ्ग कुर्यात्। ननु तर्हि कुतो नैवमुपनिबध्यते, हन्त! कथ तदन्यथासिद्धत्वप्रति-पादन विस्मर्यते। ननु तर्हि कथ नाट्यशास्त्रकारेण विश्वनाथेन च तथा वर्णि-तम्, कथ वा तदङ्गानि नाट्यशास्त्रकारेण दर्शितानीति चेदुच्यते-तत्र यदि विस्तारप्रदर्शनपूर्वक प्रत्याहारादिकानि द्वाविंशत्यप्यङ्गानि कश्चिदुपनिबध्नातु तदापि न क्षति। परं तु तथाकरणे नातिशयचमत्कारित्वमवगम्यते, अत एव न कैश्चिदपि प्राच्यै प्राचीनैर्वा कविभिस्तथोपनिबद्धमिति तदनुसारिणा मया-ऽपि न तथोपनिबध्यत इति।

यत्कृपालवमात्रेण मूकोऽप्यायाति वाग्मिताम् ।
स एव देवदेवेशः शंकरः शं करोतु नः ॥ २ ॥

( नान्द्यन्ते )

---

पुन स्वकार्यसिद्धौ वाग्मितामेव कारण मन्यमानस्तद्गुणप्रापकात् शकरात्कल्याण प्रार्थयते-यत्कृपा-इति । यस्य सकलचराचरप्रसिद्धस्य, कृपाया लवमात्रेण लेशमात्रेण, 'लवलेशकणाणव' इत्यमर । मूकोऽपि वाग्मितामायाति, सर्वथा वचनमात्रेणापि रहितो मूको वावदूकेष्वपि वाचोयुक्तिप्रवीणो भवति । एतेन कारणनिरपेक्षकार्यसपादनसामर्थ्यवत्त्वात्तस्य सर्वलोकातिशयित्व व्यज्यते । उक्त हि 'न खलु परतन्त्रा प्रभुधिय' । स एव देवदेवानामिन्द्रादीनामीश । शकर —श कल्याण करोतीति शकर । एतेन कल्याणकारित्व तत्स्वभाव एवेत्यतो न मे प्रार्थनावैफल्यसभावनाऽपीति भाव । न —अस्माक सभासदा नटादीना च, श कल्याण करोतु ।

'नान्द्यन्ते' इति । इय नान्दी, अष्टाभि पदैरुपनिबद्धा, तथा चोक्तम् "पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत"। अत्र सुप्तिङन्तैर्द्वादशभि पदै श्लोकचतुर्थभागैरष्टाभिर्वा पदैर्नान्दी भवति। तथा च श्लोकद्वयात्मिका अष्टपदीय नान्दी। यद्वा 'या प्रत्यूहे'ति पूर्वश्लोक पूर्वरङ्ग , 'यत्कृपालवे'ति द्वितीयश्लोक सुप्तिङन्तैर्द्वादशभि पदैरुत्तमा नान्दी। उक्त च मन्दारमरन्दे 'अष्टभिर्दशभि श्रेष्ठा तथा द्वादशभि पदै । अष्टादशपदैर्वाऽपि द्वाविंशत्या पदैर्युता' इति। ननु यदि पूर्वश्लोक पूर्वरङ्गात्मकस्तर्हि पूर्वरङ्ग विधाय सूत्रधार कथ न निवर्तते, इति चेदुच्यते नान्द्या अपि पूर्वरङ्गस्यैवाङ्गत्वात्तत्रापि पूर्वरङ्गतैव । किञ्च-स्थापककुशीलवादीनामपि कार्याणि सूत्रधारेणैव क्रियमाणानि सर्वनाटकेषूपनिबद्धानीति पूर्व प्रतिपादितमेव । सूत्रधारस्य तथाविधमेव चातुर्यं यत्सर्वमेव प्ररोचनाप्रस्तावनादिक कर्तुं प्रभवति। उक्त च 'नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्र धारयतीत्यर्थे सूत्रधारो निगद्यते"। मातृगुप्ताचार्यैरप्युक्तम् "चतुरातोद्यनिष्णातोऽनेकभूषासमावृत । नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ नानागतिप्रचारज्ञो रसभावविशारद । नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वित ॥ छन्दोविधानतत्त्वज्ञ सर्वशास्त्रविचक्षण । तत्तद्गीतानुगलयकलातालावधारण ॥ अव-

आज्ञप्तोऽहं विद्वत्परिषदा, यदद्यश्वो भारते देशे हीन-दीनदशामापन्नाना वीराणां शौर्यसाहससहिष्णुतागुणो-द्योतनाय परकाष्ठामापत्ति भजमानानां पौर्वकालिक-क्षत्रियाणां शौर्यधैर्याद्यभिनयेनाधुनिकभाविनवयुवकेषु शौर्यधैर्यादिगुणसंपादनाय, प्रसादनिर्णयरत्नाकराभि-

---

धाय प्रयोक्ता च योक्तॄणामुपदेशक । एव गुणगणोपेत सूत्रधारोऽभिधी-यते" ।। इति ।

एव च श्लोकद्वयात्मकाष्टपद्या 'यत्कृपे'ति द्वादशपदात्मिकाया वा नान्द्या अन्ते पुन सूत्रधारो भारतीवृत्त्या सभासदा प्ररोचना कुरुते। 'प्रशसात प्ररोचना'इत्युक्ते । तत्स्वरूपम्—श्रोतृदृष्टॄणा प्रवृत्तौ उन्मुखी-करणम्। तच्चाग्रिमव्याख्यात स्वत एव स्फुटीभविष्यति। **आज्ञप्त** इति। अहम्-साक्षादेव न तु केनापि संदेशद्वारेण । तत्रापि विद्वत्परिषदा, न तु एकेन केनापि सामान्यपुरुषेण। एकपुरुषदृष्ट कदाचिदन्यमनस्कतया अभिनिवे-शतो वा अन्यथाऽपि प्रतिभासेत। विद्वत्परिषदा दृष्ट नान्यथा भवितुमर्हति। तत्रापि आज्ञप्त , न तु कथित एव। एतेन तद्वचनानामनुल्लङ्घनीयत्व व्यज्यते। तथा च परिषदेन नाटकग्रन्थ पूर्वमवगत्य मामभिनेतुमाज्ञापयति। एतेन वक्ष्यमाणवस्तुनि आदरातिशयो बोध्यते। अथाज्ञामेव दर्शयति। अद्यश्व—आधुनिकसमये, हीना—नीचाम्, दीनाम्—दु खबहुलाम्, दशाम्—स्थितिम्, आपन्नाना प्राप्ताना वीराणाम्। शौर्यादिगुणोद्योतनाय—यद्यपि गुणगुणि-नोरभेदेनोपस्थानात् वीरेषु शौर्यादयो गुणा सन्त्येव, तथापि हीनदीनदशात्वेन लुप्तप्रायाणा गुणानामुद्दीपनाय। तथा आधुनिकसमये जनिष्यमाणेषु नव-युवकेषु शौर्यधैर्यादिगुणाना संपादनाय बोधनाय। यद्यपि तेषु ते गुणा सन्त्येव तथापि न ते स्वात्मनि विद्यमानास्तान् गुणान् जानन्तीति 'भवन्त शूरा धीराश्च'इति बोधयितुम्। परकाष्ठामिति कन्दरादिनिवासभूशयनोपवासादि-चरमदशावस्थायिनीमापत्ति सेवमानाना पूर्वकालसमुत्पन्नाना क्षत्रियाणाम्-महाराणाप्रतापानाम्। अत्र आदरार्थं बहुवचनम्। 'शौर्यादीनामभिनयेन'इति। आदिशब्दाद् साहससहिष्णुताना ग्रहणम् ।

**'प्रसाद' इति**। चन्दवरदायिप्रणीतप्राकृतसमिश्रितस्य टीकाभाष्याद्यभावेन

**धानराजेन्द्रादिविविधग्रन्थनिर्मात्रा मथुराप्रसाददीक्षित-प्रणीतेन अभिनवेन वीरप्रतापनाटकेनोपस्थातव्यमिति प्रतिपात्रं विधीयतां यत्न ।**

( मनसि ) **अस्तु तावन्नटीमाह्वयामि ।**

---

विदुषामपि दुर्बोधस्य 'पृथ्वीराजरासो' इत्यभिधेयस्य महाकाव्यस्य लौकिक-भाषाया प्रसादाभिधेयटीकाया , निर्णयसिन्ध्वादिग्रन्थेषु सत्स्वपि धर्मशास्त्रीय-विवादग्रस्तविषयाणा जागरूकत्वाद् धर्ममार्तण्ड-बघाटाधिपति श्रीराजा-धिराजदुर्गासिंहमहोदयानामनुरोधेन 'निर्णयरत्नाकर' नामकस्य प्रबन्धस्य, निखिलजैनशास्त्रमालोड्य बृहदाकारमयस्य सप्तभागात्मकस्य (जैनसाइक्लो-पीडिया ) अभिधानराजेन्द्रकोषस्य निर्मात्रा-रचयित्रा । आदिपदात् नारायणबलिनिर्णय-कुतर्कतरुकुठार-समासचिन्तामणि-कवितारहस्य काशी शा[1]स्त्रार्थ-कलिदूतमुखमर्दन वर्णसकरजातिनिर्णय-अस्पृ[2]श्यमन्दिरप्रवेशनिर्णय-जैनरहस्य-भगवद् ( विष्णु ) नखशिखवर्णनादीना ग्रहण बोध्यम् । **मथुरा-प्रसाद**-इति । 'रूपकस्य कवेराख्या गोत्राद्यपि स कीर्तयेद्'इति नियमा-त्कवेर्नामनिर्देश कृत । **दीक्षितेन**-इति । अयमुपाधिः कवेरष्टमपूर्वपुरुषेण वैदिकप्रक्रियानिपुणेन कर्मठेन कान्यकुब्जेन श्रीकान्तनाम्ना यज्ञे वैदिकमन्त्रैरभि-प्रादुर्भावाद् यज्ञकरणाच्चोपलब्ध ।तद्वशीया सर्वेऽपि कान्यकुब्जेषु श्रेष्ठा दी-क्षितेत्युपाधिभूषिताश्च मन्यन्ते । दीक्षितस्य पूज्यत्वात्तदुपाधेरेव प्राधान्येन विशेष्यत्वान्नाम्न पूर्वनिपात । **अभिनवेन** इति। आधुनिकसमये नाटकीय-प्राकृतभाषाया विद्वत्स्वप्रचाराद्भरतादिप्रणीतनियमानुकूलनाटकनिर्माणे विदुषामप्रवृत्ते । अनवलोकितपूर्वत्वाद्वाऽस्याभिनवत्वम् । यद् यस्मात्कारणात् मया वीरप्रतापनाटकेनोपस्थातव्यमिति हेतो प्रतिपात्र यत्नो विधीयताम् । यत्तदोर्नित्यसबन्धात्तदर्थबोधकेन इतीत्यनेन यदित्यस्य सबन्ध इति ।

---

१ काशी शास्त्रार्थे विशुद्धानन्ददयानन्दसरस्वत्योर्य· काश्या शास्त्रार्थो ऽभूत् तमानुपूर्व्याऽक्षरश. समुद्धृत्य तदुपरि समीक्षा च कृता ।

२ अस्पृश्यमन्दिरप्रवेशनिर्णयद्वयमास्ति, संस्कृते लौकिकभाषायां च ।

( प्रकाशम् ) अयि प्रिये !

नटी—अज्ज ! इयंम्हि ।

आर्य ! इयमस्मि ।

( तत प्रविशति गायन्ती नटी )

हंसट्ठाणं करडो लहइ बुहो तं ण को वि वारेइ ।
हंसस्थानं करटो लभते बुधस्तं न कोऽपि वारयति ।
पियसारंगबलायाकदम्बएहि हठाउ नीसारिओ ॥ ३ ॥
पिक-सारङ्ग-बलाकाकदम्बकै हठान्नि सारित ॥

---

'अयि प्रिये इति । अयि इति सबोधने । प्रिये ! दयिते ! 'सुखदु खादिषु सहचारिणि ! एतेन विद्वत्परिषदाज्ञापालने सर्वथा सहायकत्वमस्या अभिव्यज्यते । 'आज्ञप्तोऽहम्' इत्यारभ्य भारती वृत्ति । तल्लक्षणं चैवम्—'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रय । भेदै प्ररोचनायुक्तैर्वीथीप्रहसनामुखै ' इति । आर्य इति । नटी-सूत्रभृतो परस्पराह्वानमार्यशब्देन कर्तव्यम् । तथा चोक्तम् 'भगवन्तोऽवरै-र्वाच्या विद्वद्देवर्षिलिङ्गिन । विप्रामात्याग्रजाश्चार्या नटीसूत्रभृतौ मिथ " इति। इयमस्मि-भवत सन्निकृष्टमेवागताऽस्मि । इदमस्तु सन्निकृष्टवर्तिनि नियमात्।

हंसट्ठाणम्-इति। करट -काक , 'काके तु करटारिष्टबलिपुष्टसकृत्प्रजा ' इत्यमर । भक्ष्याभक्ष्यविवेकशून्य काक , सदसत्परिज्ञानरहित काक इव भीरु परस्त्रीलम्पट पुरुषविशेषश्च । काकस्वरूपधारिणा जयन्तेन जगज्जननी सीता अभिलषिता, ततो रामेणैकबाणेन काकोऽक्ष्णा काणीकृत इति काकस्य पर स्त्रीकामुकत्व प्रसिद्धम् । हंसस्य नीरक्षीरविभेदचतुरस्य, अथ च युक्तायुक्त विवेककुशलस्य पुरुषविशेषस्य, स्थान-पदं, राज्यसिंहासन च । लभते-प्राप्नो-ति, प्राप्तुमुद्युक्त एव, न तु अद्यावधि प्राप्त । त करट-पुरुषं च, कोऽपि बुध पण्डित , देशदशातत्त्वज्ञश्च । पक्षिषु शुकस्य पाण्डित्यं प्रसिद्धम् , कादम्बर्या उपन्यासे पूर्वजन्मस्मरणात् अध्ययनशीलत्वात् । बोधयतीत्यन्तर्भावितणि-जर्थे बुध्यते इति बुध । तुलसीदासः शुकरूपधारिणा हनुमता बोधित इति प्रसिद्धम्। न वारयति-नैव निवारयतीत्यर्थ । पश्येत्यध्याहार्यम् । पिक -

सूत्रधारः—

आर्येऽनया तु गीत्या मे मेवाडं नीयते मनः ।

प्रतापांशं यत्र गृह्णन्—( इत्यर्धोक्ते एव )

( नेपथ्ये )

आः, क एवं मयि स्थिते ममांशं ग्रहीतुं शक्नोति ।

सूत्रधारः— जगत् कृष्णैर्निवारितः ॥ ४ ॥

( इति ब्रुवन् निष्क्रान्त सनटीक सूत्रधार )

प्रस्तावना ।

---

कोकिल , सारङ्ग –चातक , बलाका –बकस्त्रिय , तेषा कदम्बके -समूहे , हठान्नि सारित । अन्यत्र प्रिया प्रतापपक्षपातिनोऽभिमतप्रतापाश्च, साराङ्गा साराणि अङ्गानि येषा ते साराङ्गा हृष्टपुष्टाङ्गा । सारङ्ग पशुपक्षिणो । एत योरेवार्थे शकन्ध्वादौ पाठ , अन्यत्र साराङ्ग इति। तथा बलेन सेनया, अकति गच्छतीति बलाक -सेनापति , तेषामीषत् कदम्बके समूहे हठान्निस्सारित । राज्यसिंहासनमारोढुमिच्छन्नेव जगन्मल्लो रावतकृष्णादिभिर्निस्सारित इति भाव ।

सूत्रधार 'प्रियसाराङ्गबलाके' पदैर्बोधित द्वितीयार्थमवगत्य कथयति–आर्ये इति। हे आर्ये! नाट्यप्रयोगचतुरेषु श्रेष्ठतमे! एतेन तस्या स्वकार्यक्षमत्व द्योत्यते। अनया प्रत्यक्षेन श्रुतया गीत्या तु गीतिनामकच्छन्दसा अथवा गानेन तु मे मन मेवाड नीयते। अत्र 'नीयते' इह 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्' इत्युक्ते प्रधानकर्मणि प्रत्यय । यत्र-यस्मिन् मेवाडदेशे, प्रतापाश–प्रतापस्य, अशम् अधिकारं गृह्णन्, ज्येष्ठभ्रातृत्वात्तस्यैव राज्येऽधिकार इति । इति-अर्धोक्तमेव श्रुत्वा केनापि विपक्षिणा गृह्यमाण स्वराज्याशमवगत्य नेपथ्ये कुत्रचिद् अप्रत्यक्षविषयस्थाने स्थित प्रताप सक्रोधं कथयति । आ कष्टम् ।

---

१ 'मेवाडम्' इत्यस्य मदपाटकमिति सस्कृतम् । तत्साधुत्वम्—'कगचजतदपयवां प्रायो लुक्' इति दकारलोपे 'अवर्णो य श्रुति.' इति यकारे, पुनर्यकारस्य इकारे, गुणे च कृते 'मे' इति। पाटक इत्यत्र 'पो व ' इति पकारस्य वकारे 'प्रथमद्वितीययोस्तृतीयचतुर्थौ' इति डकारे पुन. 'कग-' इति ककारलोपे स्वरपरत्वात्पूर्वस्वरलोपे 'मेवाड' इति ।

(तत —मद्भागहरणबुद्धिर्गर्वप्रध्वस्तभागधेयोऽसौ ।
कोपानले जिगमिषुर्धावति को यमपुरीं गन्तुम् ॥ ५ ॥
इति पठन् प्रविशति सालुम्बसहित प्रतापः । )

**प्रतापः**—( इतस्ततोऽवलोक्य )
आम्! ज्ञातम् । पित्रा जगन्मल्लाय राज्यं दत्तम् । तदेवो-
द्दिश्य केनाप्युच्यते । ( अथ किंचित्परिक्रामन् पठति )
किं स्वातन्त्र्यकृते स्वबान्धवजने हेतिर्मया गृह्यतां
कि वा स्वं विषयं विहाय विपिनं शान्त्या समासेव्यताम् ।

---

एव प्रजापालनतया मयि स्थिते शौर्यधैर्यादिविशेषगुणविशिष्टे निर्भीक तया युद्धभूमौ विद्यमाने सति को नाम ममाशम् अणुमात्रमपि मदीयभाग ग्रहीतु-हठादास्कन्दितु शक्नोति । न कोऽपीत्यर्थः। 'जगदिति'पूर्वेण सबन्ध । यत्र प्रतापाश गृह्णन् , जगत्–जगन्मल्लनामा प्रतापस्य लघुभ्राता । उत्तर-पदलोपाद् भीमादिशब्दवत्पूर्वपदमात्रेण जगदित्यनेन जगन्मल्लस्य ग्रहणम् । कृष्णै.-रावतकृष्णादिभि , निवारित –हठात्प्रतिषिद्ध ॥ ४ ॥

अथ स्वरसयोगेन प्रतापागमनमवगत्य नटीसहित सूत्रधारो निष्क्रान्त ।

**इति प्रस्तावना**–"सूत्रधारस्य वाक्य वा समादायार्थमस्य वा । भवेत्पात्र-प्रवेशश्चेत्कथोद्धात स उच्यते" इति कथोद्धाताख्या प्रस्तावना ।

**ततः**—तदनन्तरम् मद्भागेति पद्य पठन् रङ्गभूमौ सालुम्बसहित प्रताप प्रविशति । **मद्भाग** इति । मम यो भाग अशस्तस्य हरणे हठाद्ग्रहणे बुद्धिर्यस्य स , तथा गर्वेण स्वसामर्थ्यादविवेकेन अभिमानेन प्रध्वस्तं सर्वथा विनष्ट भागधेय यस्य स । तथाभूत कोऽसौ कोपानले प्रत्यासत्त्या मम क्रोधाग्नौ, जिगमिषुर्गन्तुमिच्छु सन् यमपुरीं गन्तु धावति । मया नाशित सन् शमनातिथीभवितु त्वरयतीत्यर्थ ॥ ५ ॥

आम् ज्ञातमित्यादि सुगमम् । **अथेति** । यत्पित्रा जगन्मल्लाय राज्यं दत्त तदेवोद्दिश्य केनाप्युच्यते इति निश्चयानन्तर किञ्चित्परिक्रामन्पठति । लोकव्यवहारेऽपि कोऽपि अभिनिविष्टतथाभूतपरामर्शे एवमेव करोति ।

किं पठतीत्याह—**किं स्वातन्त्र्येति** । किमिति परामर्शे । किं स्वातन्त्र्यार्थं, मया स्वे आत्मनि, बान्धवेषु-जगन्मल्लादि-

संघर्षात्स्वजनेषु दास्यपदवी मा गात् प्रजा मेऽधुना।
बाढं वा मरणं भवेन्मम न तु स्यान्म्लेच्छदृष्टा धरा ॥६॥
किमौर्ध्वदैहिकं कृत्यं पितुः पूर्वं विधीयताम्।
किं वा देशपरित्याग इति दोलायते मनः ॥ ७ ॥
( इति विमृशन्पुनरितस्तत परिक्रामति। )

---

बान्धवेषु, जनेषु-साधारणजनेषु च। समाहारत्वादेकवचनम्। हेति — वह्निज्वाला, गृह्यताम्। अय भाव —स्वातन्त्र्यबुद्ध्या विधीयमाने यत्ने गृहकलहाग्निज्वालाया सर्वानपि आत्मान बान्धवप्रजादींश्च भस्मसात्कुर्याम्। यद्वा-किं स्वातन्त्र्यार्थं, स्वे—स्वकीये, बान्धवजने जगन्मल्ले, हेति शस्त्र, गृह्यताम्, तज्जयेन राज्यप्राप्त्यर्थमिति भाव। किं वा, स्व विषय विहाय, राज्यत स्वकीय सबन्ध विच्छिद्य। यद्वा-स्व विषयं देश, विहाय-त्यक्त्वा, शान्त्या-शान्तिपूर्वक, विपिनम्-अरण्य समासेव्यताम्। मोक्षेच्छया शान्तिपूर्वकमेव तत्सेवन, न तु भयेन कातरधिया वेति भाव। एतदेव समर्थयति। स्वजनेषु स्वकीयबन्धुवर्गेषु, सघर्षात्-परस्परकलहेन शक्तिक्षयात्, अधुना मे प्रजा स्वस्य राज्येऽधिकारान्मम प्रजा, दास्यपदवीं दासताया मार्ग मा गात्। यद्यपि जाते सघर्षे इदानीमेव दासता न प्राप्स्यति, पर त्वेव सति दास्यपदवी निर्मिता भविष्यतीति तन्निर्मितौ प्रजा ता पदवीं प्राप्स्यतीत्यर्थ। वा—अथ वा, बाढ-निश्चयेन, मम मरण भवेत्। मया सघर्षभिया राज्यत्यागादरण्यगमने कृते बान्धवो निष्कण्टकराज्योपभोगबुद्ध्या मा कण्टक मन्यमानोऽरण्ये मा हनिष्यतीति हन्तु नाम, पर मम धरा म्लेच्छदृष्टा न स्यात्, म्लेच्छेन-यवनाधिपतिना अकबरेण दृष्टा अपि न स्यात्, किमुत तदाधिपत्य स्यात्। अत्र स्वकीयमरणादपि अकबरकृतस्वकीयधरादर्शनमनिष्टकरमिति तात्पर्यार्थ ॥ ६ ॥

अथ देशत्यागनिश्चयेऽपि किमधुनैव देशत्याग कर्तव्य, किं वा पितुरौर्ध्वदैहिकक्रियानन्तरमिति विचारयति—**किमौर्ध्वदैहिक**मिति। किम्—ऊर्ध्वदेहनिष्पन्न पूर्वं पितु कृत्य दशगात्रादिक विधीयताम्, मयेत्यध्याहार। किं वा ततोऽपि पूर्वमेव देशपरित्याग विधीयताम्, इति मे मम मन, दोलायते—दोलामिव कदाचित्पूर्वविचाराश्रयि भवति, कदाचिदुत्तरविचारा-

( सालुम्बमभिलक्ष्य ) आः पश्य, प्रधानमन्त्रिसमन्वितो जगन्मल्लः इत एव वितानप्रदेशे समायाति। अत आवां दूरस्थितौ भूत्वा तत्रोपविश्य पश्यावः-'किमसौ विदधाति।' ( इति तथा करोति। )

( तत प्रविशति वितानप्रदेशे विट चेटक-चूडावत्प्रधानमन्त्रिसमन्वितो जगन्मल्ल । अथ सर्वे यथास्थानमुपविशन्ति )

**प्र० मन्त्री—महाराज! ज्ञातिदेशप्रथानुरोधेन पूर्वं राज्यपीठाधिरोहणं विधाय अभिषेकानन्तरमेव पितुरौर्ध्वदैहिकी क्रिया कर्तव्या।**

**विटः—युज्यते चैवम्। अतो राज्याभिषेकोत्सवे पूर्वं द्राक्षायाः सुरा आनीयताम्, सहैव गणिका च।**

**जगन्मल्लः-चेटक! युक्तमुक्तं विटेन, अतस्त्वरितमेव राज्याभिषेकोत्सवानुरूपं सर्वं संपादनीयम्।**

---

श्रयि भवति। यद्वा-दोलामिव कदाचिद् ओजोगुणप्राधान्याद्वीररसाश्रयितया ऊर्ध्वं गच्छति। कदाचिच्च हिंसाबाहुल्यात् अनिष्टशङ्कया च वैराग्यात् अधोगच्छति। यद्वा-पितु कृत्यसपादनार्थं युद्धकरणे हिंसाबाहुल्यात् अधोगच्छति, वैराग्यात्पापराहित्येन ऊर्ध्वं गच्छति। द्विविधा दोला भवतीति तथैव व्याख्यातमिति।' रूप वाक्य वितर्कवद्'इति लक्षणात् रूपाख्य गर्भाङ्गम्॥७॥

**सालुम्बमि**ति। सालुम्ब प्रति कथयति-**आः पश्ये**त्यादि।

**विटचेटके**ति। एते नायकस्य सहायका भवन्ति। तथा चोक्तम्-'शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्या स्यु । भक्ता नर्मसु निपुणा कुपितवधूमानभञ्जना शुद्धा।' अस्य नायकस्य प्रतिनायकस्य च सहाया एते। प्रधाननायकस्यैवेति तु न नियम । अत एव मृच्छकटिके शकारस्याप्येते सहाया दर्शिता । तत्र विट -"सभोगहीनसपद्विटस्तु धूर्त फलैकदेशज्ञ । वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठयाम्"। चेट -शृङ्गारिकोऽनुचार । **प्रथानुरोधेने**ति। अत्रेद बीजम्—राज्यपीठाधिरोहणात्पूर्वमेव विधीयमाने मृतस्य पूर्वराजस्य दाहे यावत्कालमपरराजः सिंहासने नोपविशति तावत्कालमराजक तद्राज्य

**चेटकः—जं देवो आणवेदि ।**
यद् देव आज्ञापयति ।
( तत सुरामादाय गणिकया सह मार्गे गच्छति चेट । )

**चेटः—अयि माउले !**
अयि मातुलि !
**अज्ज रज्जुच्छवे तुज्झे धणं दावेमि जं बहु ।**
अद्य राज्योत्सवे तुभ्य धन दापयामि यद् बहु ।
**तयद्धभागो अम्हाणं तुम्हे त्ति पडिवज्जह ॥ ८ ॥**
तदर्धभागोऽस्माक यूयमिति प्रतिपद्यध्वम् ॥ ८ ॥

**वेश्या—यथा तुभ्यं रोचते ।**
( तत सुरामादाय गणिकया सह गच्छन्त चेट विलोक्य विलपति प्रताप । )

**प्रताप.—आः कुर्वन्ति दिवं गतस्य च सुरां पीत्वा किमूर्ध्वंक्रियां**
**किं कुर्या वसुधे पिधेहि दुरयं स्वाङ्के चिरं मा कुरु ।**

---

सपद्येत । अनन्तरभवश्चापर प्रत्यनीकराज आक्रमेत, अनधिकारिकश्चाव-काशमादाय केषाचित्साहाय्येनाधिपत्य गच्छेच्च । **और्ध्वदैहिकी**ति । दाहानन्तरं दशगात्रीयपिण्डादिभि संपाद्यमाना । राज्याभिषेकोत्सवानुरूपमिति राज्याभिषेकोद्देशिकस्य उत्सवस्यानुरूपमिति भाव । तदनुरूप च नृत्यगान सुरापानादिकमेवेति तत्तात्पर्यम् । **अयी**ति । अयि इति सबोधने । 'मातुलि' इति नीचानामुक्तय प्रायशो मातुलादिसम्बन्धाभावेऽपि तथाभूतान्प्रति तथाभूता एव भवन्ति ।

**अद्ये**ति । अद्य राज्योत्सवावसरे यद् बहुधन द्रव्यवस्त्रादिक तुभ्य दापयामि दापयिष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यदर्थे लट् । तदर्धभाग – तस्य प्राप्यद्रव्यस्य अर्द्धभाग , अस्माक भवतु, यूयम् , इति–मदुक्त स्वीकुरुत । अत्रैकवचनस्य प्रक्रान्तत्वेऽपि अस्मदो द्वयोश्चेत्येकवचने बहुवचनम् ॥ ८ ॥

**तुभ्यमि**ति । 'रुच्यर्थाना प्रीयमाण ' इति चतुर्थी ।

**आः कुर्वन्ती**ति—आ इति अत्यन्तदु खप्रदर्शनानुरूपे । एते लोका , दिव गतस्यापि–स्वर्गं गतस्यापि, किं सुरा पीत्वा, ऊर्ध्वक्रिया–दशगात्रीय-

**यत्तातः क्रिययाऽनया विहितया सद्धार्मिकाणां वरो**
**देवत्वादपनाय्य जीवति मयि प्रेतत्वमापाद्यते ॥ ६ ॥**

( इत्युद्विग्नमना दीर्घमुच्छ्वसिति । )

( नेपथ्ये )

**प्रताप ! धैर्यमवलम्बस्व। भगवदाराधनतत्पराणां नैवं-विधा क्रिया भवति ।**

---

पिण्डादिना ऊर्ध्वदेहसबन्धिनीं क्रिया कुर्वन्ति । यद्वा—चशब्दोऽप्यर्थे, स च भिन्नक्रमेण सबध्यते । ततश्च सुरामपि पीत्वेत्यर्थ । प्रकृतत्वात् येन पित्रा अस्मै राज्य दत्त तस्य दिवगतस्य पितुरिति बोध्यम् । एतेन महाकृतघ्नोऽकार्यकारी चायमिति व्यज्यते । अथ उभयसाधारण जनकत्वसम्बन्धमवगत्योद्विग्न. सन् कथयति—किं कुर्यामित्यादि । प्रधानमन्त्रिणोऽस्य पक्षपातित्वात्, पित्राऽस्मै एव राज्याधिकारदानात्, हठाद्विरुद्धाचरणे गृहकलहाग्निभयादनिष्टशङ्कातश्च किंकर्तव्यताविमूढ कथयति—**किं कुर्यामि**ति । नाहमिदानीं किमपि कर्तुं शक्त । तस्मात् हे वसुधे ! दुरय दुष्ट अय शुभावहो विधिर्यस्य तम् , न खलु मत्सदृश कश्चिद् दुष्प्रारब्धोऽभूत् , नापि विद्यमान , न वा भविष्यतीति यौगिकोऽप्यय दुरयशब्दो मय्येव शक्त इति भाव । स्वाङ्के स्वकीयोत्सङ्गे,'उत्सङ्ग-चिह्नयोरङ्क 'इत्यमर ।पिधेहि—अच्छादय। विदीर्णा सती त्व मा स्वान्त स्थापयेति तात्पर्यार्थ । चिर मा कुरु—विलम्ब न विधेहि। नाय माङ् किं तु निषेधार्थको मा शब्द इति ' माङि लुङ्'इति न लुङ् । विलम्बासहत्वे हेतु प्रदर्शयति । यद् यस्मात् कारणात्, सद्धार्मिकाणाम् उत्तमधर्माचारिणा वर, एतेन शिवाराधनभगवद्भक्त्याद्युत्तमधर्माचारिषु सर्वोत्तमत्वमस्य सूचित भवति । एवभूतस्तात., विहितया कृतया मद्यपानस्य पूर्वं कृतत्वात् करिष्यमाणत्वेऽपि अपरेषामज्ञाना भूतकालिकत्वमविरुद्धमेव । अनया पुरोदृश्यमानया वेश्यासंसर्गादिदूषितया क्रियया, मयि जीवति सति देवत्वादपनाय्य स्व कृत-कर्मप्रभावतो देवत्वप्राप्तियोग्यतासपन्नेऽपि ताते तथाभूतक्रियाकलापवशात् देवयोनेर्निरास्य प्रेतत्वमापाद्यते प्रेतयोनिं प्राप्यते, क्रियाफलबलात्तात प्रेत-योनिं प्राप्यते । तथाभूतक्रियादर्शनात्पूर्वमेव मन्मरण श्रेय इति भाव ॥ ६॥

**नेपथ्ये**—कुतोऽप्यदृष्टस्थानाच्छब्दोच्चारणविषयीभूते स्थाने ।

(तत सुरामादाय गणिकया सह प्रविशति चेट, सर्वे यथास्थान-
मुपविशन्ति, सुरा पिबन्ति च।)

प्रतापः—(दूरतस्तदवलोक्य) कथं देवा अपि विप्रलम्भयन्ति।
पश्यन्तु ते।

सुरां पिबत्येष मदीयबान्धवः
क्रियां चरिष्यत्ययमित्यपि ध्रुवम्।
न राज्यलोभात्स्वजनेष्वसिं वहे
कथं सुरा नैव मृषा वदन्त्यत.॥ १०॥

विटः—शोभनेयं सुरा। मधुरमदोन्मादिनी च।

चेटः—सुराओ अम्हे माउलाणी अइसोहणा। उअ—
सुरातोऽस्माकं मातुलानी अतिशोभना। पश्य—

दिट्ठी पफुल्लसरसीरुहतुल्लरूपा
दृष्टि प्रफुल्लसरसीरुहतुल्यरूपा।
संपुण्णचंदसरिसं सुहमाणणं से
सपूर्णचन्द्रसदृश शुभमाननमस्या।

---

**भगवदिति**। भगवदाराधनफलबलात्प्रत्यक्षविषयीभूतायामपि तथाभूत सामग्र्यामतर्कितबन्वकप्राप्तेर्नैवविवा–प्रेतत्वाद्यशुभयोनिप्रापिका क्रिया भवति। विप्रलम्भयन्ति—प्रतारयन्ति। ते प्रत्यक्षत एव विलोकयन्तु।

**सुरामिति**। एष., मदीयबान्धवो जगन्मल्लनामा,सुरा मद्य पिबति, इद मद्य-पान वर्तमानकालिकक्रियाविषयीभूतत्वात्प्रत्यक्षमेव। अय मदीयबान्धवो जग-न्मल्ल ,क्रिया पितुर्दाहादिक्रिया चरिष्यति इत्यपि ध्रुवम्, सर्वथा निश्चितमेव। अह राज्यलोभात्स्वजनेषु स्वकीयबान्धवेषु, असिं न वहे-न नयामि। नैव राज्यार्थं बन्धुषु युद्ध चरिष्यामीति भाव। अत मद्यपानपूर्वकमेव पितुर्दाहादिक्रिया-सिद्धौ, देवा, मृषा–मिथ्या, कथ नैव वदन्ति, अपि तु तेषामिद कथनं मिथ्यैवेति भाव॥ १०॥

चेट. स्वानीतवेश्याया शरीरसौन्दर्य वर्णयन् सुरातस्तस्यामाधिक्य च दर्शयति—**दिट्ठीति**। अस्या -वेश्याया, दृष्टि प्रफुल्लस्य सरसीरुहस्य तुल्यं

लावण्णरूवमरविन्दसमाणसोहं
लावण्यरूपमरविन्दसमानशोभ
चेओ णिसिंचइ सुहासविणी गिरा उ ॥ ११ ॥
चेतो निषिञ्चति सुखास्रविणी गिरा तु ॥ ११ ॥

जगन्मल्ल.—कटाक्षविक्षेपणमात्रतः सुधा-
मियं निषिञ्चत्यखिले कलेवरे ।
मनोऽपि मे दर्पकनिघ्नता व्रज-
द्विलक्षणं मादयते सुचाटुभिः ॥ १२ ॥

विटः—इयं भुजिष्या भवतोऽनुरूपिणी
रतिक्रियाभेदविभेदपण्डिता ।

---

रूपमाकार सौन्दर्य वा यस्या तथाभूताऽस्ति। शुभ—कल्याणकरम्, अस्या, आनन—मुख, सपूर्णचन्द्रसदृश—पूर्णचन्द्रवदाह्लादजनकम् । अस्या लावण्य प्रत्येकमवयवाना संस्थानसौभाग्य कान्तिर्वा, रूप सौन्दर्यम्, अरविन्देन समाना तुल्या शोभा यस्य तत्तथाभूतमस्ति । सुखास्रविणी—सुखानन्दसदोहप्रवाहिका, अस्या गिरा वचन तु चेता निषिञ्चति—चेतसि कामप्यनिर्वचनीया नवीनता प्रापयति, यथा सततम्लानलतादौ जलनिषेकात्काऽपि नवीनता प्रादुर्भवति, एवमेवास्या वचनेन मनसि काऽपि नवीनता प्रादुर्भवतीति भाव. । तुशब्दो वचनस्य अनिर्वचनीयकार्यकारित्व बोधयति ॥ ११ ॥

अथ जगन्मल्लस्ता वर्णयति—**कटाक्षे**ति । इयं पुरोवर्तिनी, कटाक्षविक्षेपणमात्रत. स्पर्शादिव्यापाराभावेऽपि कटाक्षविक्षेपादेव, अखिले—समस्ते, कलेवरे—शरीरे, प्रत्यासत्त्या मम शरीरे, सुधाम्-अमृत निषिञ्चति । यदि कटाक्षस्य विक्षेपे अबुद्धिपूर्वकप्रेरणे सुधा-निषेको मे शरीरे जायते तर्हि बुद्धिपूर्वककटाक्षेण दर्शने, शरीरादिस्पर्शने वा सुख स्यादिति त्वनिर्वचनीयमेव । तथा दर्पकस्य—कामस्य, 'कन्दर्पो दर्पको ऽनङ्ग' इत्यमर । निघ्नताम्—अधीनता, व्रजद्—प्राप्नुवन्मे मन अपि, विलक्षणम् अनिर्वचनीय यथा स्यात्तथा, चाटुभि शोभनश्लाघावचनैर्मादयते मन इति द्वितीयान्तम् । इयं सुचाटुभिर्मनो मादयते इति भाव. ॥ १२ ॥

अथ विटो जगन्मल्ल सतोषयस्ता वर्णयति—**इयमि**ति । रतिक्रियाया

सुधोद्भवा खञ्जनदृक् शुभस्तनी
सुधाभुजामूरुभवेव राजते ॥ १३ ॥

( तत प्रविशति कर्मकाण्डकोविदैरनुगम्यमान पुरोहित । )

मन्त्री—जगन्मल्ल ! ससामग्रीकः पुरोहितः समुपस्थितः। अतो राज्याभिषेककार्यारम्भो विधीयताम् ।

चेटः—( सखेद सनिर्वेद च नीचै स्वरेण )
कुदो सिआलपुत्तो समुवट्ठिओ ।
कुत श्यालपुत्र समुपस्थित ।

जग०—यथा भवतामनुमति । ( वेश्यादय एकतोऽपसर्पन्ति । )

मन्त्री—पुरोहित ! राज्ये जगन्मल्लस्याभिषेकः क्रियताम् ।

पुरो०—यदाज्ञापयन्ति भवन्तस्तत्प्रमाणम् , परं तु—
( इति मौनमास्थित । )

मन्त्री—विस्रब्धं ब्रूहि, यदपरं वक्तव्यम् ।

पुरो०—इदमपरं वक्तव्यम् यद् राज्ये ज्येष्ठपुत्रस्यैवाधिकारः, न कामप्ययोग्यतां ज्येष्ठपुत्रे प्रतापे विलोकयाम:, नापि केनापि कारणेन प्रतापमनधिकारिणं तर्कयामः ।

---

ये भेदा विभेदाश्च, तेषु पण्डिता। रतिविषयककलाकौशल्यवती इय भुजिष्या-परिचारिका, परिचारिकास्वरूपेण गृह्यमाणा। भवत अनुरूपिणी—रतिविषयक-कलाकौशल्यसाम्यात् भवत एव योग्याऽस्ति। एतेन त्वमपि रतिविषयककला-कौशल्यवानसीति सूच्यते। सुधोद्भवा—सुधाया उद्भवो यस्या सा। पूर्ववर्णित सुधामिय कलेवरे निषिञ्चतीत्यादिक विट सर्वथा स्वकृतवर्णने समर्थयति—इय सुधोद्भवा। अत एव कटाक्षविक्षेपादपि सुधा निषिञ्चति। कार्यगुणा हि कारणगुणानाश्रयन्ते इति नियमात्। तथा खञ्जनदृक् खञ्जन इव दृशौ दृष्टी यस्या सा। अत्र सादृश्य चञ्चलत्वसाधर्म्यात्। शुभस्तनी सुन्दरस्तनयुक्ता। सुधाभुजा देवाना सम्बन्धिनी, ऊरुभवा-उर्वशी इव राजते। विष्णुना जङ्घात उर्वशी समुत्पादिता इति पौराणिकी कथाऽत्रानुसंधेया ॥ १३ ॥

---

१ रतिक्रियाविषयकभेदविभेदाना वर्णनमस्मत्कृतकामकुतूहलादवसेयम् ।

मन्त्री—यदा महाराजेन उदयसिंहेन जगन्मल्लाय राज्यमदायि, तदा कथमिदं नोक्तम्?।

पुरो०—महाराजं मरणासन्नमवलोक्य तदात्मनो व्यर्थमेव क्लेशसंपादनाय नोक्तम्। निर्धारितं चैतत्, यत्त्वत एवानन्तरं युक्तमेव भविष्यति।

किञ्च—साँगाभटानन्तरितः प्रतापो
जातोऽभविष्यद् यदि युद्धवीरः।
स्वातन्त्र्यमाप्स्यत्सकला तदा भू-
र्मध्ये न चाभूदुदयस्त्वधीरः॥ १४॥

नेपथ्ये—

साधु पुरोहित! बृहस्पतिमते! साधु। एवमेवैतत्।

(ततः प्रतापमादाय प्रविशति झलारावग्वालियरनरेशादिप्रधानभटै समन्वितो रावतकृष्ण।)

---

युद्धेषु पुनरुत्तम सन्पुरोहित उदयसिंहस्य कातरता दर्शयति। **साँगाभटेति**। युद्धेषु समरेषु वीर प्रताप सागाभटस्य समनन्तरमेव यदि जात अभविष्यत्, तदा सकला—समस्ताऽपि, भू समस्तमपि भारत वर्षमित्यर्थ, स्वातन्त्र्यम् आप्स्यत्, अत्र क्रियाया अनिष्पत्तिर्गम्यते एव। यस्मात्सागाभटस्य समनन्तरं प्रतापो न जात, अस्मादेव समस्ता भू स्वातन्त्र्य नाप्स्यत्। पुनस्तदेव समर्थयन्स्पष्टयति—अधीर, उदय-उदयसिंह, मध्ये सागाप्रतापयोर्मध्ये, न च-नैव अभूत्। तयोर्मध्ये उदयसिंहसद्भावादेव भारत स्वतन्त्र नाभूत्, एतेन उदयसिंहकार्यं पराधीनताप्रापकमिति जगन्मल्लस्याभिषेकमविक्षिपति। प्रतापस्य च राज्याभिषेके कृते उदयसिंहस्य मध्यसद्भावात् समस्त भारत स्वतन्त्र न भवेत् परमेवमपि मेवाडं स्वतन्त्रमेव भविष्यतीति प्रतापाभिषेक एव कर्तव्य इति तदाशय॥ १४॥

**पुरोहित** इति—पुर अग्रे प्रत्यक्षत पुरतो वा हितं यस्मादिति अन्वर्थमेव ते नामास्ति। बृहस्पतेर्मतिरिव मतिर्यस्य, यथा बृहस्पतिर्देवकार्याणि निर्भयतया स्वसुखनिरपेक्षतया याथार्थ्येन युक्तायुक्तविचारपूर्वकं करोति, एव-

**रावतकृष्णः—मन्त्रिन् ! राज्ये कस्याधिकारः? प्रतापस्य जगन्मल्लस्य वा? को वाऽनयोर्योग्यः?**

**मन्त्री—उदयसिंहमहाराजेन जगन्मल्लाय राज्यं दत्तम्।**

**रा० कृष्णः—**( सक्रोधमिव ) **कस्मै दत्तमिति न पृच्छयते। किं तु कस्याधिकारः? को वा योग्यः?**

**मन्त्री—प्रतापस्यैवाधिकारः, स एव योग्यश्च।**

---

त्वमपि निर्भीको यथार्थवक्तेति भाव । **एवमेवैतदि**ति नेपथ्यस्थैर्निरपेक्षैर्ब्राह्मणादिभिर्देवैर्वा समर्थ्यते। एवमेवेत्यादिना सर्वथा त्वदुक्तमुचितमिति भाव । **मन्त्रिन्नि**ति। मन्त्रिन् ! रहस्यविचारेषु यस्य बुद्धि प्रसरति, सर्वथोचितविचारकारिन्। कस्याधिकार इति साऽधिक्षेपमादिशति । प्रतापस्य जगन्मल्लस्य वा? ज्येष्ठपुत्रस्यैव धर्मशास्त्रेष्वधिकारसमर्थनात्स एव योग्यो भवति। अथ ज्येष्ठपुत्रोऽपि क्वचित्पित्राज्ञाविरुद्धाचरणान्नीचगुणयुक्तत्वात्पतितत्वादिदोषाच्चायोग्यो भवतीत्याह—**को वाऽनयोर्योग्यः।** पितृभक्त्याद्युत्तमगुणयुक्त प्रजावत्सलो धार्मिकश्च प्रताप एव योग्य इति तत्तात्पर्यम् । मन्त्री तत्प्रश्नोत्तरमदत्त्वा छलेन जगन्मल्ल समर्थयन्—'महाराजेन जगन्मल्लाय राज्य दत्तम्' इत्युत्तरयति। पितुरधिकारात्स यस्मै राज्य दद्यात्तस्यैव राज्यम्। को वा योग्य को वाऽयोग्य इति तु उदयसिंहो जानीताम्, मया तु यस्मै दत्त तस्यैवाधिकारो मन्यते। **सक्रोधमिवे**ति । एतेन यदि त्वयौचित्ये विचारो न क्रियते तदा अह शस्त्रसाहाय्येन हठाद् योग्यमेव स्थापयिष्यामि। **कस्मै** इति । इद तु मया पृष्टमेव न, कथमन्यत्पृष्टमन्यदुत्तरयसि इति छल मा कुरु। अथ त्वया मम प्रश्नो नावगत इति चेत्तर्हि पुन कथयामि-कस्याधिकार को वा योग्य, अधिकारिण योग्यं च कथय। अधिकारिणो योग्यस्य च प्रतापस्य स्वीकारात्तत्समर्थनं स्वत एव फलिष्यतीति तदाशय । अथ मन्त्री प्रतापस्याधिकार योग्यता च स्वय स्वीकरोति—**स एव योग्यश्चे**ति। पञ्चविंशतिष्वपि भ्रातृषु प्रताप एव योग्य, नेतरे। अत्रैवकारेण इतरेषा व्यावृत्तिरपि विधीयते ।

रा० कृष्णः—तर्हि स एवाभिषिच्यताम्, न काचिदत्र युष्माकं विप्रतिपत्तिः?

मन्त्री—परं तु स न स्वीकरोतीति श्रुतम्।

रा० कृष्णः—स कथं न स्वीकरिष्यति।

मन्त्री—यदि स स्वीकुर्यात्तर्हि 'स्वर्णे सुगन्धः' इत्यहं मन्ये। एवं सति आर्यगौरवरक्षा चिरस्थायिनी भविष्यति।

(तत प्रतापाभिमुखा सर्वे उपतिष्ठन्ते।)

---

पुन रावतकृष्णस्तत्स्वीकृतिं कार्यान्विता विधातुमाह—**तर्हि स एवाभिषिच्यतामि**त्यादिना। एव च तदभिषेके भवतोऽनुमतिरस्तीति ज्ञायते। अथ योग्यत्वेऽपि यदि तदभिषेके त्व नानुमतिं ददासि किं तु योग्यतामात्रमेव प्रकटयसि तर्हि युष्माक विरोवस्तु कथमपि नास्तीति विरोधाभाव स्वमुखेनैव द्रढयति—**न काचिदि**त्यादिना।

मन्त्री स्वविरोध परिहरन् तस्यानभिषेके स्वदोष च वारयन् कथयति—**परं तु** इति। यद्यपि अह तमेवाभिषेक्तुमिच्छामि। पर तु स प्रताप स्वीकरोत्येव न। एवं च तदस्वीकारादेव अगत्या जगन्मल्लमहमभिषिञ्चामि। अधिकारिण प्रतापस्य त्यागादनधिकारिषु मध्ये पित्रा जगन्मल्लाय दत्तमिति कृत्वा जगन्मल्लस्यान्यापेक्षया अधिकारात्। किञ्च यथा प्रतापो न स्वीकरोत्येवमन्ये न स्वीकरिष्यन्तीति जगन्मल्लमभिषिञ्चामीति तदाशय। पुना रावतकृष्ण आह—**स कथं न स्वीकरिष्यती**ति। स त्ववश्यमेव स्वीकरिष्यतीति भाव। त्वया तथाभूतो यत्न एव न विहितो येन स स्वीकुर्यात्, किं तु अहमिदानीमेव तं स्वीकारयिष्यामि। अथ मन्त्री तदभिषेके सर्वथा स्वविरोध परिहरन् परमप्रसन्नता प्रकटयति—**यदि स स्वीकुर्यादि**त्यादिना। 'जातुयदोर्लिङ्' इह 'यदायद्योरुपसख्यानम्' इति भविष्यदर्थे लिङ् लृटोऽपवाद। 'स्वर्णे सुगन्ध' इति असभावितामेव तत्कृता स्वीकृतिमह मन्ये। यथा प्रयत्नशतैरपि स्वर्णे सुगन्धो नोत्पादयितु शक्य., एव तत्कृता स्वीकृतिरपि असभावितैव। एतेन प्रतापस्य राज्याभिषेके मया महान्प्रयत्नो विहित इति दर्शितं भवति। अथ वा-स्वर्णं स्वत एव बहुमूल्य सुशोभन च वस्तु, तत्र यदि

रा० कृष्णः—प्रताप ! केयं भवतोऽनुदारता
रणाद्भिया कातरतामथाचरन् ।
दधासि चेत्तां हृदये ततो वयं
क याम क वीरमुपाश्रयेम वा ॥ १५ ॥

---

सुगन्ध स्यात्तदा तु अतर्कित एव महान् लाभ स्यात् । एवमेव प्रताप्स्य राज्याभिषेके महान् लाभ इत्यर्थद्वयेन विरोधपरिहार, प्रसन्नता च प्रकटितौ भविष्यत । एव च तत्कृते राज्याभिषेकस्वीकारे फल दर्शयति—**आर्यगौरवरक्षे**त्यादिना । आर्याणा गौरवरक्षा, न खलु मेवाडप्रदेशमात्रस्य गौरवरक्षा चिरस्थायिनी भविष्यति किन्तु सर्वेषामस्मदादीनामपि गौरवरक्षा चिरस्थायिनी भविष्यति । एतेनास्माकमेव प्रतिष्ठालाभ इति स्वकीयमेव कार्यं तत्स्वीकृतौ ध्वनयति । इदमार्याणामस्माकमेव कार्यमिति कृत्वा सर्वे प्रतापाभिमुखा उपतिष्ठन्ते । 'उपतिष्ठन्ते' इत्यत्र 'अकर्मकाच्च' इत्यात्मनेपदम् । तत्र प्रथम रावतकृष्णस्तत्प्रशसानुपूर्वक त सञ्जीकरोति—

**प्रताप**ेति । हे प्रताप भवतः इय का अनुदारता, न ह्येतादृश्यनुदारता भवादृशेषूचिता भवति । का इत्यनेन सखेद विमर्षति । अथ त्वं वदे, नाहमनुदारता करोमि किन्तूदारभावात् राज्यमपि त्यक्त्वा विपिन व्रजामीति तदुदारता परिहरन्स्वाभिमतामुदारता दर्शयति—अथ रणात्सग्रामात्, भिया, भयेन 'भीत्रार्थाना भयहेतु' इति पञ्चमी । कातरता कातर्यम्, आचरन् कुर्वन्सन् चेत्ता कातरता हृदये दधासि ततो वय क याम । अयं भाव अन्य खलु कातरो भवतु नाम, परं तु त्वं तु न तथाभूतोऽसि । अत• अन्यस्य कातर्यमादाय स्वे हृदये क्रीडार्थं यद्वा अस्माक परीक्षार्थ कृत्रिमत्वेन आचरसि, न खलु स्वाभाविक त्वद्हृदये कातर्यमस्ति, अत एव दधासीत्याधाराधेयभावो बोध्यते । ततः तदनन्तर, त्वमेव वद वय क याम वीराश्रयिणामस्माकमन्यद्गतिस्थानं नास्तीति कुत्र वय तिष्ठेम । त्वया कातर्ये कृते अकालमरणमेवास्माकं भविष्यतीति व्यज्यते । अथैव वदेरन्य वीरमनुयात, तत आह—क वीर वयमुपाश्रयेम । यदि त्वदतिरिक्तोऽन्यो वीरोऽस्ति तर्हि त्वमेव तन्नामोच्चारय । एतेन त्वदतिरिक्तस्य अस्मभ्योऽधिकस्य तथाभूतवीरस्य अभाव एवेति

सालुम्बः—रणाङ्गणेऽनारतमुत्सवप्रियं
सॉगाह्वयं त स्वपितामहं स्मरेः।
म्लेच्छाधिपादार्यगुरुत्वरक्षणे
यदीययत्नः सफलत्वमाययौ ॥ १६ ॥

प्रता०—( पुनरुत्तरार्द्धं पठति ' संघर्षात्स्वजनेष्वित्यादि ' )

ग्वालियरनरेशः—कोऽयमस्थाने उद्वेगः। कथं नाम स्वजनेषु संघर्षः, त्वमेवास्य देशस्याधिपतित्वे योग्योऽसीत्यस्माभिः सर्वैर्मन्यते।

---

बोध्यते। तस्मादस्माकमकालमरणं मा भूदित्यस्मासु दया विधाय स्वाभिषेकं स्वीकुरुष्वेत्यर्थ ॥ १६ ॥

अथ सालुम्ब प्रताप प्रोत्साहयन्नाह—रणाङ्गणे इति। अनारत-सततमेव, रणाङ्गणे-रण एव अङ्गण तत्र, उत्सवप्रियम्-प्रिय उत्सवो यस्य तम्। ' वा प्रियस्य'इति वैकल्पिक प्रियेत्यस्य पूर्वनिपातः। सॉगाह्वय-'सॉगा' इतिनामक त प्रसिद्ध स्वस्य आत्मन पितामह स्मरे। य सदैव रणाङ्गण-मेवोत्सवस्थानममन्यत त लोकविख्यात सॉगा स्मरेति भाव। एतेन पूर्वजाना-मनुसरण श्रेयस्कर धर्मसाधक चेति बोध्यते। यदीययत्न -यत्सम्बन्धी प्रयत्न, म्लेच्छाधिपात्-म्लेच्छराजात्, बाबरनामकात्, आर्यगुरुत्वस्य रक्षणे-आर्य-गौरवरक्षणे, सफलत्वम्, आययौ—तदीयो यत्न सफलो बभूव। आर्यगौरवं रक्षितमभूदित्यर्थ ॥ १६ ॥

अथ प्रतापस्तथाकरणे गृहकलहाग्निं सभावयन् पुनरुत्तरार्द्धम्, 'सघर्षा-त्स्वजनेषु दास्यपदवीं मा गात् प्रजा मेऽधुना। बाढ वा मरण भवेन्मम न तु स्यान्म्लेच्छदृष्टा वरा' इति पठति। अथ ग्वालियरनरेशस्तद्बुद्धिं निरस्यन्नाह-कोऽयमित्यादि। अनवसर एवेद विचार्यते। तदेव स्पष्टयति—कथमिति। नामेति संभावनायाम्। स्वजनेषु सघर्ष कथमिह सभाव्यते। यत सर्वैरप्य-स्माभिरेकमत्येन त्वमेवाधिपतिरितिमन्यते। यदि तवाधिपत्यस्वीकारे मतभेद स्यात्तदा सघर्षसम्भावना भवेत्। परं तु स एव नास्तीति तत्सभावनापि दूरापास्ता।

जातोऽहंपूर्विकायां सुभटगणगणो धैर्यशौर्यादियुक्तो
म्लेच्छानां यश्चमूना युधि शिरसि पतन्खण्डशस्तद्व्यधत्त।
सूरं भित्त्वा स सर्वः प्रलयमुपगतो नैव निघ्नत्वमाप्तो
युष्माभिर्गौरवं तद् यवनरणभिया हेलया नाश्यते किम् १७॥

प्रतापः—नाहं रणाद् बिभेमि। यदि मत्कृते एव आर्याणां गौरवरक्षेति भवतां निश्चयस्तदाऽहमपि सर्वस्वत्यागेनापि आर्यगौरवं रक्षिष्यामीति प्रतिजाने।

---

अथ सघर्षसभावना निरस्य पुनस्त प्रोत्साहयति—जातोऽहमिति। धैर्यशौर्यसाहससहिष्णुतादिगुणयुक्त, अहपूर्विकाया जात· "अह पूर्वमह पूर्वमित्यहंपूर्विका स्त्रियाम्" इत्यमर, अह पूर्वं युद्धाय गमिष्यामि अह पूर्वं युद्धाय गमिष्यामि इत्येव रूपेण जात समुत्पन्नो यो लोकोत्तरशौर्यशालितया प्रसिद्ध, सुभटगणाना गण—सैनिकाना समुदाय·, युधि संग्रामे, म्लेच्छाना-यवनाना, चमूना—सेनानाम्, उभयत्र बहुत्वात् अनेकेषा यवनानामनेकवारं चेति बोध्यते। शिरसि मस्तकेष्वित्यर्थ, अत्र जातित्वादेकवचनम्, यद्वा-शिरसि-प्रधानस्थाने, पतन्-तत्स्थानमाक्रामन्, तत् शिर मस्तकम्, तेषा मस्तकानीत्यर्थ, यद्वा-तत् व्यूहप्रधानभूत स्थान खण्डश व्यधत्त। सर्व समस्त स पूर्वोक्त सुभटगणगण·, सूर सूर्यं भित्त्वा, प्रलयम् अपुनरावर्तिनाशम्, उपगत -प्राप्त, मुक्तोऽभूदित्यर्थ·। उक्त हि "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिहतश्च य"। निघ्नत्वम् अधीनता, नैव प्राप्त। म्लेच्छानामेव अधीनो नाभूदित्येव न, किन्तु कस्यापि अधीनो नाभूदिति भाव। तत् गौरव—स्वातन्त्र्यरूप गौरव, युष्माभि, पूज्यत्वात् 'अस्मदो द्वयोश्च' इति वा बहुवचनम्, यवनरणभिया—यवनाना सग्रामभयेन, हेलया-अनादरेण, किं नाश्यते। एतेन न ते त्वा जेतु समर्था इति सूच्यते। तस्मात् भयं त्यक्त्वा सज्जीभूय स्वातन्त्र्यगौरव रक्षेति भाव॥ १७॥

प्रताप· स्वाभिमत प्रकटयति—नाहमित्यादिना। यदि 'मत्कृते' मया कृते—मत्कृते, 'सुप्सुपा' तृतीयेति योगविभागाद्वा समास। मया कार्ये कृते इति युष्माक निश्चयस्तर्हि अहं सर्वस्वत्यागेन—राज्यादिसमस्तवस्तुत्यागेन,

सर्वे—साधु साधु स्ववंशधरानुचरितमेव प्रतिज्ञातम् ।

मन्त्री—अथेदमप्यस्माकं वक्तव्यम्, यन्मेवाडदेशाधिपतित्वे-नहि नहि आर्याधिपतित्वे-भवतामेवाधिकार इति अत्र-भवन्तं भवन्तमेवाभिषिषिक्षामः ।

प्रतापः—यथा भवद्भ्यो रोचते । न मे विप्रतिपत्तिः ।

( ततो रावतकृष्णग्वालियरनरेशप्रभृतय प्रताप सिंहासने उपवेशयन्ति, पुरोहितश्चाभिषिञ्चति । )

---

आर्यगौरव रक्षिष्यामि, न खलु आत्मगतमेव गौरव प्रतिपालयिष्यामि किन्तु परगतमपि गौरव रक्षिष्यामीति प्रतिज्ञास्वरूपमुक्तम् ।

**स्ववंशधरे**ति । स्ववशधरस्य अनुचरितमेव, यथा त्वत्पूर्वजेन साँगानृपेण प्राणपणेन आर्यगौरवरक्षा कृता तथैव त्वयाऽपि प्रतिज्ञातम् । अथवा-स्ववशस्य धर स्ववशधर नटस्तदनुचरितमेव । यथा नट वंशस्य शिखरे गन्तु प्रतिज्ञाय मरणादिभयरहित सस्तदूर्ध्वभागे गच्छति तथैव त्वयाऽपि प्रतिज्ञातम् । एतेन त्वं सागानृपादप्यधिकतरं गौरव प्राप्स्यसीति बोधित भवति । **अस्माक**-मिति । न खलु ममैव किं तु सर्वेषामस्माकम् । किं वक्तव्यमित्याह-**मेवाडे**-त्यादि । अथ त्वरया भ्रमाद्वा उच्यमाना मेवाडदेशमात्रता ससंभ्रमं निर-स्यति—**नहि नही**ति मेवाडदेशमात्राधिपतित्वे भवतामधिकार इत्येव न, किन्तु समस्तभारतवर्षे विद्यमानानामार्याणामधिपतित्वे भवतामधिकार, ततश्च त्वमेव आर्याधिपतिरिति सूचित भवति । एतेन लोके 'हिन्दूपति-' रिति प्रसिध्यमान नाम बोधितं भवति । भवन्तमेव नत्वन्यम् । अभिषिषि-क्षाम—वयं सर्वे अभिषेक्तुमिच्छाम । सोपसर्गत्वात् 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति षत्वम् । अथ प्रताप सघर्षभिया स्वाभिषेके ताटस्थ्य प्रकट-यति—**यथा भवद्भ्यो रोचते** । यदि भवन्त सर्वेऽप्यैकमत्येन मामभिषेक्तु-मिच्छन्ति तर्हि अभिषिञ्चन्तु । मम विप्रतिपत्ति—स्वाभिषेके विरोधो नास्ति । एतेन मामेवाभिषिञ्चन्तु इति ममाभिनिवेशोऽपि नास्तीति स्फुटं भवति । **अभिषिञ्चती**ति-सजलेन कुशत्रयेण वैदिकमन्त्रेणाभिषिञ्चति ।

पुरो०—

आर्यस्थितीनां परिरक्षणार्थमसिव्रते त्वामभिषेचयामः ।
विजित्य शत्रूनखिलां स्वगोत्रां गोत्रानुगां त्वं प्रतिपालयस्व॥१८॥

इत्याशिष ददाति ।

( ततो देशकुलाचारानुरूप सर्वे उपायनान्युपहरन्ति । )

( अथ वैतालिकौ प्रविशत । )

प्रथमः–राजंस्त्वत्सुभटासिकृत्तयवनासृङ्मांसमज्जाकुल-
म्लेच्छव्यूहपलायनार्तनिनदव्याप्ताः समाः स्युर्दिशः ।

---

पुष्पैराशिष ददत् पठति—

**आर्यस्थितीना**मिति । आर्याणा स्थितय ब्राह्मणादिजात्यवस्थानानि, अथ वा स्थितय मर्यादाव्यवहारा इति यावत्, तेषा परिरक्षणार्थं-परित सर्वतोभावेन रक्षणार्थम्, एतेन स्वगतपरगताना व्यवहारविरुद्धानामाचाराणा रक्षणं सूचित भवति, असिव्रते–खड्गव्रते, त्वामभिषेचयाम । आर्यव्यवहारलोपिन खड्गप्रायश्चित्तेन शोधय, अत्राशे त्वामधिपतित्वेन स्थापयाम । एतेन मानसिंहेन सह विरोधकारण बीजरूपेण स्थापित भवति। त्व शत्रून् विजित्य, अखिला–समस्ता, गोत्रानुगा–वशपरपरानुयाता, स्वगोत्रा स्वपृथ्वीं, प्रतिपालयस्व । सति कष्टेऽपि ता मा त्याक्षीरिति भाव । एतेन भाविसकलयुद्धविषय कष्टसहनेऽपि स्वदेशरक्षा पुनर्युद्धेन स्वभूमिप्राप्तिरित्यादि बीजरूपेणोपक्षिप्यते ॥ १८ ॥

**आशिष**मिति । अप्राप्तप्रार्थनमाशी, तद्रूपाणि पूर्वोक्तभावार्थसूचकानि पुष्पाणि ददाति । **कुलाचारानुरूप**मिति । भिल्लजातीया स्वरुधिराक्त शरमुपहरन्ति, एतेन स्वरुधिरदानेन त्वामनुचरिष्यामीति बोधयन्ति। क्षत्रिया खड्गमुपहरन्ति, खड्गसाहाय्येन त्वा मनुचरिष्याम इति सूचयन्ति। विश रूप्याणि, ततो धनेनानुचरिष्याम ,अन्ये च साष्टाङ्गप्रणामादिना स्वशरीरेण प्राणपणेन त्वामनुचरिष्याम इति सूचयन्ति।

तत्र प्रथमो वैतालिक पठति । **राजन्नि**ति । हे राजन् ! तव सुभटानामुत्तमवीराणा ये असय खड्गास्तै कृत्ता –छिन्ना ये यवनास्तेषामसृग्मासमज्जाभिराकुलो व्याप्तो यो म्लेच्छव्यूह

निःशङ्कप्रसरन्मनोज्ञविभवभ्राजिष्णुलक्ष्मीलस-
त्त्वत्कीर्तिप्रयतावदातमखिलं भूमण्डलं भासताम् ॥ १६ ॥
प्रत्यर्थिक्षोणिपालप्रसृमरतरुणध्वान्ततिग्मांशुराशि-
र्दुर्धर्षारिक्षितीशक्षितिधरदमनप्रौढदम्भोलिनेता ।
सन्न्यायव्रातवल्लीविपिनघनघटावारिवाहानुकारी ।
जीयादार्यस्थितीनां यवनपतिनयाद्रक्षकोऽयं प्रतापः २०॥

गरुडसर्पाद्याकारेण स्थितोऽकबरसैनिकसमुदाय, तस्य पलायने-पराङ्मुखीभूय धावने, य आर्तनिनद दीनशब्द, तेन व्याप्ता, समा सर्वा दिश स्यु. । यथा भयेन विह्वला पलायमाना लोका दिग्भ्रमेण सर्वतो गच्छन्ति तथैव यवनसैनिका भयग्रस्ता गच्छन्तु । तथा नि शङ्कम्-अप्रतिहतबाध यथा स्यात्तथा, प्रसरन्-विस्तारमाप्नुवन्, य मनोज्ञविभव शोभमानैश्वर्यम्, तस्य भ्राजिष्णुलक्ष्म्या-देदीप्यमानशोभया, लसन्ती विद्युदिव द्योतमाना, या त्वत्कीर्तिस्तया प्रयत-पवित्रम्, अवदात-धवलम्, अखिल-समस्त, भूमण्डलम् भासताम् । शुभकर्मभि शोभतामिति भाव । शुभ्रा त्वत्कीर्ति समस्तभूमण्डले प्रसरत्विति तात्पर्यार्थ । अत्र पूर्वार्धेन भाव्यमानयुद्धविजयो बीजरूपेणोपक्षिप्यते। अपरार्द्धेन विजयसमुद्भूतप्रतापयशोऽवस्थान बोध्यते । यद्यत्र पद्ये—

'राजस्त्वत्सुभटासिकृत्तयवनासृङ्मासमज्जाकुला-
नार्यव्यूहपलायनार्त्तनिनदव्याप्ता समा स्युर्दिश ।
नि शङ्कप्रसरन्मनोज्ञविभवभ्राजिष्णुलक्ष्मीलस-
त्त्वत्कीर्तिप्रयतावदातमखिलं भूमण्डल भासताम्॥ इति पठेत्,

तदा सन्ध्यक्षररहितमिद पद्य भावगाम्भीर्यमजहदेव शब्दचित्रतामपि व्यञ्जयति। एव सन्ध्यक्षरमिति संज्ञा। किन्तु किञ्चिद्दार्ढ्यशैथिल्याच्च तथोक्तम् ॥१६॥

अथ पुन पठति—प्रत्यर्थीति । प्रत्यर्थिनो विरुद्धा ये क्षोणिपाला राजानस्त एव प्रसृमरतरुणध्वान्तानि—प्रसरणशीलगाढान्धकारा., तेषा तिग्माशुराशि—प्रचण्डसूर्य, यथा ग्रीष्मर्तौ माध्याह्निकसूर्यसमक्षमन्धकारलेशोऽपि नावतिष्ठते, एवमेव प्रतापसमक्ष विरुद्धभूपाला अपि नावतिष्ठन्ते। तथा दुर्धर्षा.—अतिप्रौढा ये अरिक्षितीशा—शत्रुभूता राजान, त एव क्षितिधरा—पर्वता, तेषा दमने, प्रौढदम्भोलिनेता—प्रौढस्य पुष्टस्य दम्भोलेर्नेता,

द्वितीयः—विद्वेषिभूमिपतिमानविनाशधीरो
म्लेच्छाधिनाथबलनाशनसिद्धवीरः ।
आर्यप्रभुः समरविज्ञसभाधुरीणो
मेवाडराड् जयतु युद्धकलाप्रवीणः ॥ २१ ॥

---

यद्वा—प्रौढ' परमपुष्टो युवा दम्भोलिनेता इन्द्र । अत्र प्रौढपदेन क्षितिधरेषु दम्भोलेरप्रतिहतशक्तिर्व्यज्यते, दम्भोलिनेतुश्च विशेषणे तस्य सामर्थ्यातिशयो व्यज्यते । तथा सता—पक्षापक्षभ्रान्तादिदोषराहित्याना, न्यायाना यो व्रात —समूह , स एव वल्लीविपिन तद्विषये घनघटायुतो यो वारिवाहो—मेघ , तस्य अनुकारी—तत्सदृश इत्यर्थ । वल्लीविपिनं वारिवाह पालयति, तथैव अयमपि न्याय पालयति, यथा तेन तत्रस्था सुखिनो भवन्ति तथैवास्य न्यायेन तदाश्रयिण सुखिनो भवन्ति । यवनपतिनयात्—अकबरप्रपञ्चात्, आर्यस्थितीनाम्—आर्यमर्यादाना, रक्षक , अय-समक्ष विद्यमान , प्रताप जीयात्—सर्वोत्कृष्टतया वर्तताम् । अत्र प्रथमपदेन प्रत्यर्थिना समूलनाशकत्वं, द्वितीयपदेन प्रोद्धताना दमनकारित्वम् , तृतीयपदेन विनम्रेषु अनुग्रहकारित्व बोध्यते । चतुर्थपदेन अकबरनीते रक्षणात् मानसिंहागमनतत्त्यागादिसूचनं बीजरूपेणोपक्षिप्यत इति । अथास्य पद्यस्य स्थाने—

'प्रत्यर्थिक्ष्माबलारिप्रसमरतरुणध्वान्ततिग्माशुराशि-
र्दुर्धर्षारिक्षितीशक्षितिधरदमनप्राप्तजम्भारिरूप ।
सन्न्यायव्रातवल्लीविपिनघनघटावारिवाहानुकारी
जीयादार्यस्थितीना यवनपतिनयाद् रक्षक स प्रताप ।'

यद्येव पठेत् तदा सन्ध्यक्षररहितमिदं पद्य संपद्यते ॥ २० ॥

अथ द्वितीयो वैतालिक पठति—विद्वेषीति । विद्वेषिणो ये भूमिपतयो राजानस्तेषा मानविनाशे धीर , तथा म्लेच्छाधिनाथस्य—अकबरस्य बलनाशने सामर्थ्यनाशने सैन्यनाशने वा सिद्धवीर., सिद्धश्चासौ वीर सिद्धवीर , अप्रतिहतवीर इत्यर्थ । आर्यप्रभु —आर्याणा प्रभु , अनेनैव आर्यसत्ताऽस्तीति भाव । समरविज्ञाना या सभा तत्र धुरीण , सभानायक. । एतेन हल्दीघाटिकयुद्धे आक्रमणपरामर्शे अस्य नायकत्व बीजरूपेण उपक्षिप्यते । युद्धकलाया

स्वहिन्दुधर्मरक्षणे क्षणे क्षणे कृतेक्षणः
क्षमाधिनायकश्च यः क्षमास्वरूपतां दधौ।
कलाकलापकोविदो रणाग्रणीर्दयानिधिः
प्रतापसिंहभूपति स एष सर्वदा जयेत्॥ २२॥

स्वसौख्यनिःस्पृहः सदाऽऽत्मदेशदुःखनाशने
विरोधिमानमर्दको महाहवे समुद्यतः।
स्विकां स्थितिं दृढां युधा चकार यश्च भारते
प्रतापसिंहभूपतिः स एष सर्वदा जयेत्॥ २३॥

---

प्रवीणो मेवाडराड्–मेवाडदेशाधिपति , जयतु–सर्वोत्कृष्टतया वर्तताम्॥२१॥

पुनराह–**स्वहिन्दु** इति। हिनस्ति पापानीति हिन्दुः। हिसिधातोरौणादिके दुप्रत्यये सकारलोपे च कृते हिन्दुरिति। धर्माधर्मव्यवस्थाया सनातनधर्मिणामेव कार्याणा पापनाशकत्व नेतरेषामित्याद्यस्मत्कृतशङ्करविजयनाटके वर्णितम्। स्वस्य–आत्मन , स्वेषाम्–आत्मीयाना वा, हिन्दुधर्मस्य, रक्षणे–वर्णव्यवस्थादिपालने, क्षणे क्षणे-प्रतिक्षणमित्यर्थ ,कृतेक्षण –कृतम् ईक्षणं येन स कृतेक्षण॰, दत्तदृष्टि। क्षमाया अधिनायक पृथिवीपति य क्षमास्वरूपता शान्तिस्वरूपता दधौ। कलाकलापस्य चतु षष्टिसख्याकाना मतान्तरेण द्वासप्तति संख्याकाना वा कलाना य कलाप समूहस्तस्य कोविद –विद्वान्। नृत्याद्यनुपयुक्तकलाना कोविद एव, न तु तत्कर्तेति कोविदपदस्वारस्येन बोध्यते। रणे सग्रामे, अग्रणी। तथापि दयानिधि –दयासमुद्र , स एष प्रतापसिंहभूपति सर्वदा जयेत्–सर्वोत्कृष्टतया वर्तताम्। पूर्वत्र आशी , इह तु प्रार्थनमेवेति॥२२॥

पुनराह–**स्वसौख्ये**ति। आत्मन देशस्य यद् दु ख तस्य आत्मदेशदु खस्य नाशने–स्वदेशसबन्धिदु खनिवारणे, सदा–सर्वदा, स्वसौख्ये नि स्पृह स्वसुखनिरपेक्षः। तथा विरोधिना–प्रतिकूलाचारिणा मानमर्दक , अथवा-विरोधिनो मानस्य–मानसिंहस्य मर्दक॰, महाहवे–युद्धे, समुद्यत –समुद्युक्त य भारते–भारतवर्षे,स्विकाम्–आत्मीया, स्थितिं मर्यादा वा, युधा–सग्रामेण, दृढा चकार, स एष प्रतापसिंहभूपति सर्वदा जयेत्। 'स्विका'मित्यत्र 'भस्त्रैषा-'इति

अखण्डभूमिमण्डले प्रभूतकीर्तिराशिमान्
धराधरेन्द्रमन्दिरेऽपि यस्य गीयते स्तवः ।
सुरेन्द्रकेन्द्रमुत्सवाकुलं यदीयसन्नुतौ
प्रतापसिंहभूपतिः स एष सर्वदा जयेत् ॥ २४ ॥

( तत. किञ्चिद्गातुं नर्तितुं च आयियासति वाराङ्गना । )

**प्रतापः**—केयम् ।

**प्रधानमन्त्री**—महाराज ! इयं नर्तितुमागता वाराङ्गना ।

---

न विकल्प , आत स्थानिकस्यैवाकारस्य तद्विषयत्वात् । ततश्च खिका परमखिकेत्यादौ नित्यमेव, सञ्ज्ञोपसर्जनीभूत स्वशब्दोऽस्य विषय इति ॥ २३ ॥

पुनराह—**अखण्डेति** । अखण्डभूमिमण्डले-समस्तपृथ्वीमण्डले, प्रभूतकीर्तिराशिमान्-अत्यन्तकीर्तियुक्त , धराधर -शेष , इन्द्र -देवेन्द्र , तयोर्मन्दिरेऽपि, 'मन्दिरे' इत्यत्र जातित्वादेकवचनम्, पाताले स्वर्गे चेत्यर्थ । यद्वा-धराधरेन्द्रस्य मन्दिरे-हिमालयाधिपतिगृहे, अथवा-धराधरेन्द्रे यन्मन्दिर कैलाशस्तत्रापि, यस्य स्तव -स्तुति , गीयते । यदीयसन्नुतौ-यस्य वास्तविकस्तुतिविषये, सुरेन्द्रकेन्द्रम्-इन्द्रस्य प्रधानस्थानम् , उत्सवाकुलम्-विविधोत्सवव्याप्तम्, कश्चिच्च यस्य शौर्यं कश्चिन्न्याय्य कश्चिद्गम्भीरता कश्चित्पाण्डित्यं कश्चित्सत्यतामालोक्योत्सवमातनोति, एव यस्य सन्नुतौ सुरेन्द्रकेन्द्रमुत्सवाकुल स एष प्रतापसिंहभूपति सर्वदा जयेत् ॥ २४ ॥

**तत** इति । सा पूर्वमायाता वाराङ्गना किंचिद् गानाय नर्तनाय च आयियासति-आयातुमिच्छति । प्रतापस्ता वारयितुमिच्छन्निव कथयति-**केयमि**ति । **इयं वाराङ्गने**ति । सत्यपि ज्ञाने इह सता शूराणा सघट्टे तस्या आगमन न सभवतीति नानया वाराङ्गनया भवितव्यमित्यभिसधाय इह स्त्रिया अपि प्रवेशो न युज्यत इति तामपि वारयन् कथयति-**केयमि**ति ।

**अथ** मन्त्री तदभिप्रायमवगच्छन् कथयति-राज्याभिषेके महति महोत्सवे प्रथानुरोधेन नर्तितुमागता इय वाराङ्गना । पुन प्रताप कथयति-**आः किमनये**ति । आ इति अत्यन्तदु खप्रकाशके खेदे च । म्लेच्छैराक्रान्ते

प्रतापः—आः! किमनया?

लुण्ठन्ती विषये स्वके युवजनान् व्यामोह्य रूपं धनं
वंशस्योपरि नर्तनं विदधती हीनेति निस्सार्यताम्।
स्थानेऽस्याश्च परस्य देशविभवावाहृत्य तत्स्वामिनं
स्वीयं भृत्यमसौ विधाय भवतः खड्गो रणे नृत्यतु॥२५॥

---

पराधीने च सति भारते कथ महोत्सवस्यावसर, उत्सवस्याप्यवसरो नास्तीति तस्या आगमन सर्वथा निष्प्रयोजनमित्याह—**अनया किम्।** अनया किञ्चिदपि प्रयोजनं नास्ति। अथ तस्या कृत्येषु दोष प्रदर्शयन् तत्स्थितिमप्यसहमान कथयति।

**लुण्टन्ती**ति। इदम प्रकान्तत्वात् इय स्वके विषये स्वकीये देशे, 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमर। अथ च स्वके-स्वकीये, विषये-आलिङ्गनादिके, युवजनान् सग्रामसमर्थान्, अथ च विषयक्षमान्, व्यामोह्य सदसद्विवेकासमर्थान् विधाय, रूपं धन—प्रत्यासत्त्या तेषा युवजनानामेव रूप धनं च लुण्टन्ती, सासर्गिकरोगादिना रूप, हावभावादिभिर्धनं च अपहरन्ती। वशस्य-महादण्डाकारेण स्थितस्य वशस्य, उपरि, नर्तनं विदधती, अथ च-वंशस्य-स्वकुलस्य उपरि नर्तन विदधती-स्वकुलमप्यवगणयन्ती। हीना-नीचजातीया इति हेतोर्निस्सार्यताम्, इत स्थानादित्यर्थ। अत्र प्रथमपदेन स्वकीययोद्धृप्रतिबन्धकत्व द्वितीयपदेन अकार्यकारित्वमिति कृत्वा नि सारणमस्या विधीयताम्। तर्हि को नृत्यतु इत्याह—अस्या स्थाने, परस्य-अन्यस्य, शत्रोर्वा देशविभवौ आहृत्य तत्स्वामिनं स्वीयं स्वकीय भृत्य विधाय असौ-प्रत्यक्षविषयीभूतो, भवत. खड्गो रणे नृत्यतु। सा च स्वदेशे एव, तत्रापि व्यामोह्य अथापि रूपं धन च मुष्णन्ती, तेषामज्ञानदशाया चोरयन्ती, भवत खड्गस्तु शत्रोर्न तु स्वकीयस्य, देश समस्तविभवं च, राज्यमेवेत्यर्थ। आहृत्य हठादपहृत्य, न तु व्यामोह्य, नापि आहरन्, अत्र त्वाप्रत्ययेन आहरणानन्तरमपि योद्धृप्रतीक्षार्थं तत्रावस्थानं बोध्यते। तद्देशस्वामिन—स्वकीयभृत्यत्वविधानान् तद्देशस्वामिन अनुगामित्व खड्गस्य च स्वभृत्यतया तत्पोषकत्व मवगम्यते। तेन न्यायकारित्व खड्गस्य व्यज्यते। इय वशस्योपरि नृत्यति, तथा च स्वकुलस्योपरि नर्तनान्महानीचत्व तस्या बोध्यते, भवत खड्गो रणे

पश्य—

लुञ्चन्ती स्वप्रदेशे परविभवगतान् वंशमध्ये व्रजन्ती
 शून्ये हस्तौ क्षिपन्ती क्षितिशिरसि रयादुत्पतन्ती पतन्तीम्।
निस्सार्यैनां ममैषा परविषयगतां संपदामालुटन्ती
 मूर्ध्नोऽरीणां हरन्ती चरतु रिपुकुलस्योत्तमाङ्गेऽसिधारा२६॥

( इति स्वकीयं खड्ग निष्काश्य दर्शयति )

( तत सा वेश्या तत्स्थानात्किञ्चिदपसरति । )

---

शत्रूणामुपरि नृत्यतु । खड्गस्य पुस्त्वात्पुरुषकृतनर्तनमतिचपलं सर्वतोभावेन प्रवर्तमान चेति शत्रूणा नाशोऽधिकतया बोध्यते ९ अत्र वाराङ्गनाया कार्याणामधमत्वादस्याश्चोत्तमत्वात्तत्स्थाने खड्गस्य नर्तनमुचितम्। तेन च भाविसंग्रामबोधना ॥ २५ ॥

अथ पुन प्रताप शौर्याभिनिवेशेन स्वखड्ग दर्शयन् कथयति—लुञ्चन्तीति । स्वप्रदेशे-स्वकीये प्रकृष्टे देशे पत्तने इत्यर्थ , अथ च स्वकीये प्रकृष्टे देशे स्थानविशेषे इत्यर्थ , परविभवगतान्—उत्कृष्टमैश्वर्यं प्राप्तान् , विभवशालिन· श्रेष्ठिन , अथवा अन्यस्य विभवं गतान्, अनायासलब्धसंपत्तीन् , लुञ्चन्तीम् । अनायासलब्धसंपत्तयो वेश्यागामिनो भवन्तीति तेभ्य सर्वतोभावेन धन निष्काशयन्तीम् । वशमध्ये-वेणुदण्डे, व्रजन्तीं—गच्छन्तीम् , अथ च—वंशमध्ये—स्वकुले,व्रजन्तीम्-अटन्तीं,कुलटामित्यर्थ ,शून्ये द्रव्यादिरहिते,असमर्थे वा पुरुषे हस्तौ क्षिपन्तीम् , द्रव्यादिरहितमसमर्थं वा गलहस्तेन निष्काशयन्तीम् , अथवा-शून्ये-आकाशप्रदेशे, हस्तौ क्षिपन्तीं-नर्तनसमये आकाशप्रदेशे भावबोधनार्थं हस्तक्षेपण कुर्वतीम् , शून्ये हस्तक्षेपणं दोष इति कृत्वा दुष्टस्वभावाम्। तथा क्षितिशिरसि-पृथिव्या उपरि,रयात् वेगेन, उत्पतन्तीम् नृत्यविशेषे तथा विधानात्, तथा पतन्तीम्—भावबोधनार्थं निपतन्तीम् । अथवा—क्षिते -मृत्यो·,शिरसि रयात् उत्पतन्तीं पतन्तीं च निर्भीकामित्यर्थ । अथवा—क्षितौ-नाशे, शिरो यस्य तस्मिन् क्षयोन्मुखे, उत्पतन्तीम्—उपरि आगच्छन्तीं पतन्तीं च, सर्वद्रव्याकर्षणार्थमित्यथ । एव दोषविशिष्टामेना निस्सार्य परविषयगता—शत्रुदेशस्थिता, सपदा—सम्पत्तिम्, आलुटन्ती—हठादपहरन्ती अराणा-शत्रूणा, मूर्ध्न —शिरासि, हरन्ती एषा मम असे -खड्गस्य, धारा,

प्रतापः—( भूमिं स्पृष्ट्वा प्रणमति प्रतिजानीते च । )

यावन्मे धमनीमुखेषु रुधिरक्लेदोऽपि सन्तिष्ठते
मांसं वाऽस्थनि तिष्ठति क्वचिदपि प्राणाः शरीरे स्थिताः।
तावन्म्लेच्छपतेः कथंचिदपि न प्राप्स्याम्यहं निघ्नताम् ।
स्वातन्त्र्यस्य पदं समस्तवसुधा नेतुं यतिष्ये भृशम्॥२७॥

( अथ सर्वे स्वशस्त्राण्युद्यम्य प्रतिजानते )

---

रिपुकुलस्य उत्तमाङ्गे मस्तके चरतु। 'मम असिधारा' इत्यत्र ममेत्यस्य असिना सह सबन्ध, ततश्च देवदत्तस्य गुरुकुलमितिवन्नित्यसाकाङ्क्षत्वात्समासेऽपि तेनैव सहान्वयो बोद्धव्य । भिन्नार्थत्वात्परशब्दे न कथितपदत्वदोष, रिपुविषयगतामिति वा पाठ । अत्रापि तस्या नि-सारणपूर्वक प्रकारान्तरेण तत्कार्याणा कथनात् भावियुद्धोद्योग सूच्यते । परविषयगता सपदामालुटन्तीमित्यनेन च पञ्चमाङ्कगतो लुण्टनादि बीजरूपेण उपक्षिप्यते ॥ २६ ॥

अथ प्रतापो हस्तेन भूमिं स्पृष्ट्वा तत्रस्था भूम्यधिष्ठायकदेवता प्रणमति । हस्तेन पाद स्पृष्ट्वैव उत्तमप्रणामव्यवहारो भवतीति तमेवासौ विदधाति—**प्रतिजानीते चेति**। वक्ष्यमाणा प्रतिज्ञा च करोति । **यावन्मे** इत्यादि। यावत्पर्यन्त मे मम धमनीमुखेषु-नाडीप्रान्तेषु,रुधिरक्लेदोऽपि—रुधिरस्यार्द्रताऽपि,सन्तिष्ठते—सस्थास्यते इत्यर्थ । अथ रुधिरार्द्रतानाशेऽपि स्वस्थता सभवतीत्याह—**मांस**मिति। वा—अथवा, यावत् अस्थनि क्वचिदपि मासं तिष्ठति स्थास्यतीत्यर्थ । अस्थिचर्मविशेषेऽपि जीवति सत्याह । किं बहुना—यावत् प्राणा· शरीरे स्थिता·-विद्यमाना सन्ति, तावत् अहम्-अहमिति-स्वाभिमानसूचकम्,क्षत्रियकुलोत्पन्न· आर्यजातीयोऽहं प्रताप, कथमपि—केनापि सामादिप्रकारेण, म्लेच्छपतेरकबरस्य, निघ्नताम्—अधीनता, न प्राप्स्यामि, किं तु समस्तवसुधासम्पूर्णां पृथिवीं,स्वातन्त्र्यस्य पद स्थान, नेतुं-प्रापयितु,भृशमत्यन्त,यतिष्ये-यत्न करिष्यामि । 'धमनी'ति ' नाडी तु धमनि शिरा' इत्यमर । अत्र 'सर्वतोऽक्तिन्नर्थादित्येके, इति ङीष्। 'सतिष्ठते'इत्यत्र 'समवप्रविभ्य स्थ·, इत्यात्मनेपदम्, 'यावत्पुरानिपातयोर्लट् ' इति लट्। वसुधापदेन वसुधारकत्वात्तस्याः स्वातन्त्र्यप्रापणे आवश्यकत्वं सूच्यते ॥ २७ ॥

**सर्वे—एवं सति वयं सर्वे त्वदायत्तजीवनाः ।**

**किञ्च—**

**घर्मबिन्दुरपि यत्र शरीरात्तावकान्निपतितः समरे स्यात् ।**
**तत्र शोणितभवाः शतशः स्युः प्रत्यनीकपृतनासु तटिन्यः २८॥**

( तत सभयमिव सा वाराङ्गना पुनरुपेत्य कथयति । )

**वेश्या—महाराज ! क्षमस्व माम् । अद्य प्रभृति अहं काषाय-वसना योगिनीवेषेण भिक्षामाचरन्ती शौर्यसंचारि-**

---

अथ प्रतापस्य प्रतिज्ञामाकर्ण्य उत्साहोद्रेकाद् वीररसपूर्णा-स्तत्रस्था सर्वेऽपि स्वशस्त्राणि उन्नीय प्रतिज्ञा कुर्वन्ति । तामेवाह—**एवं सतीति** । ‘यदि म्लेच्छपतेरधीनता न प्राप्स्यामि, समस्ता पृथ्वीं च स्वातन्त्र्यपद प्रापयितु यतिष्ये इति भवता निश्चयस्तर्हि वय सर्वेऽपि ‘त्वदायत्तजीवना’ इति । तव आयत्तम्—अधीन जीवन येषा ते तथा, त्वदधीनजीवना , यत्र यथा अस्माक जीवनै· प्रयोजन स्यात् तत्र तथैव नियोजय, नैवास्माक ननु नचेत्यादि किमप्यत्र वक्तव्यमस्ति ।

**किं चेत्यादि** । नैव अजाविकादय इव शौर्यरहिता आकिंचित्कराश्च वयं, किं तर्हि इत्याह—**घर्मबिन्दुरिति** । यत्र—यस्मिन्, समरे—संग्रामे, तावकात्-त्वदीयात् शरीरात् घर्मबिन्दुरपि निपतित स्यात्—यदि निपतेत्, तर्हि तत्र समरे—तत्रैव सग्रामे इत्यर्थ· । प्रत्यनीकपृतनासु-शत्रुसेनासु, शोणितभवाः—प्रत्यासत्त्या शत्रुसैनिकाना रक्तोत्पन्ना शतशस्तटिन्यो नद्य स्यु , भविष्य-न्तीत्यर्थ· । अत्र भवत साधारणदु·खदशाया स्वेदबिन्दुनिपातेऽपि यदि वथमेवं करिष्यामस्तर्हि भवत शरीरतो रुधिरनिपाते शत्रूणा किं करिष्याम इति तु वर्णनातीतमेवेति तेषामाशय ॥ २८ ॥

**सभयमिवेति** । अपराधिना हृदये स्वाभाविकमेव भय भवतीति सभयमिव सा प्रतापसमीपे गत्वा कथयति । किं कथयतीत्याह—**महाराजेत्यादि** । **कषायेति** । कषायेण रक्तानि वस्त्राणि काषायाणि, काषायाणि वसनानि-वस्त्राणि यस्या सा , त्यक्तगृहकार्या विरक्तेत्यर्थ । अथ आजीवनोपायमाह—योगिनीवेषेण भिक्षामाचरन्ती ‘भिक्षया आजीवन प्रायश्चित्तमेवैति

गानबलेन सहस्रशो वीरान् देशसेवार्थं सज्जीकरिष्यामि, कातराणामपि हृदये दृढमतिप्रबलं शौर्यं संचारयिष्यामि, नातः परं भवद्राज्ये कोऽपि कातर उपलप्स्यते ।

( इति पादयोः पतति । )

प्रता०—उत्तिष्ठ, देशसेवार्थमेवमेव विधेहि ।

नेपथ्ये

साधु साधु सर्वे भवन्तो दृढसंकल्पा सन्तु ।

( ततो निष्क्रान्ताः सर्वे । )

इति श्रीमथुराप्रसादकृतौ वीरप्रतापनाटके राज्यपीठाधिरोहणं नाम प्रथमोऽङ्कः ।

---

प्रायश्चित्तं कुर्वन्ती । अथ तत्फलमाह—**शौर्येत्यादि** । शौर्यं संचारिणः—शौर्यप्रादुर्भावकस्य, गानस्य बलेन । हठादिव शौर्योत्पादकेन गानेनेत्यर्थः । सहस्रशो वीरान्, देशसेवार्थं—देशस्वातन्त्र्यार्थं, सज्जीकरिष्यामि प्राणानपि त्यक्तुमुद्यतान् करिष्यामि । अन्यदप्याह—**कातराणामपीति** । युद्धवार्ताश्रवणमात्रतोऽपि कम्पितहृदयानामपि हृदये, किमुत अकातराणां हृदये। **दृढमतीत्यादि** । दृढा मतिर्यस्मिन् तत्, पराङ्मुखविचाररहितम् । अथवा—दृढम्—निश्चितम्, अतिप्रबलम्—अत्यन्तयुद्धाभिनिवेशयुक्तं, शौर्यं संचारयिष्यामि—प्रतिक्षणमुच्छलदङ्गेषु अहं शौर्यमभिनिवेशयिष्यामि । किं बहुना, तवाभिमतादत्यधिकतरमहं संपादयिष्यामि । किं तदित्याह—**नातःपर-**मित्यादि । अतः परम्—मम गमनानन्तरमेव प्रारभ्यमाणमत्कार्योत्तरकालानन्तरं भवद्राज्ये समस्तराज्येऽपीत्यर्थः, कोऽपि—एकोऽपि, कातरः नोपलप्स्यते-सर्वथा कातराणामभावात्तत्प्राप्तिमसंभाविनीमेव विधास्यामि । मा क्षमस्व, इति एवं, कथयन्ती सती पादयोः प्रतापस्येति शेषः, पतति ।

अथ प्रतापस्तामादिशति—**उत्तिष्ठेति**। स्वकार्ये सन्नद्धा भव । देशसेवार्थम्—एतेन पुण्यातिशयो बोध्यते, तथा हि एतत्कार्यसंपादनेन देशस्वातन्त्र्यलाभात्समस्तब्राह्मणक्षत्रियवैश्येतरेषां स्वत एव सेवा संपादिता भवति । एवमेव—यथा त्वया उक्तं तथैव, विधेहि ।

**नेपथ्ये** इति । कुत्राप्यनिर्दिष्टस्थाने स्थित कश्चिद्देवो ऋषिर्वा कथयति। साधु साधु–अतिशोभनमिद भवता कार्यम् । दृढसकल्पा –अपरित्यक्तप्रतिज्ञा भवन्त सन्तु । इत्याशिष ददाति । अत्र आशिष्यर्थे लोट् । इत्याशिषोऽनन्तर सर्वे निष्क्रान्ता ।

इति श्रीमथुराप्रसादकृतौ वीरप्रतापनाटके वैजयन्तीटीकाया
राज्यपीठाधिरोहण नाम प्रथमोऽङ्क ।

# द्वितीयोऽङ्कः ।

(पितु क्रियाकर्मनिवृत्त कर्णद्वितीय सुखासीन प्रताप ।)

**प्रतापः—क इदानीं द्वारि तिष्ठति ।**

**दौवारिकः—( प्रविश्य ) जेदु जेदु महाराश्रो ।**

जयतु जयतु महाराज ।

**प्रता०—शक्तिसिंहं भ्रातरमाह्वय ।**

**दौ०—जं देवो आणवेदि ।**

यत् देव· आज्ञापयति ।

( इति निष्क्रान्त । )

**दौ०—( शक्तिसिंहमुपसृत्य ) महाभाय ! तत्थ महाराश्रो भायरं**

महाभाग्य ! तत्र महाराजो भ्रातर

**सत्तिसीहं दट्ठुं अहिलसइ ।**

शक्तिसिंह द्रष्टुमभिलषति ।

---

अथ द्वितीयाङ्कमवतारयति । तत्र 'किमौर्ध्वदैहिक' मित्यादिना प्रथमाङ्क उन्नीत पितुरौर्ध्वदैहिककृत्यकरण पितु क्रियाकर्मनिवृत्त , इत्यादिना सूचयन्, ' आर्यस्थितीनाम् ' इत्यादिना पुरोहितस्याशीर्वचनेनोपक्षिप्तमार्यमर्यादारक्षणं स्वकीयपृथ्वीपालन च, 'खड्गो रणे नृत्यतु' इत्यादिना सूचित भावियुद्धं भ्रातृसग्रहादिद्वारेण तद्विजयोपाय च दर्शयति । **पितु**रिति । पितृसम्बन्ध्यौर्ध्वदैहिकसकलकर्मकरणानन्तर, विरुद्धपक्षस्याभावात्, प्रजाया स्वस्मिन्ननुरागाच्च सुखासीन आर्यमर्यादारक्षणोपायं चिन्तयन् पूर्वं शक्तिसिंहमात्मानुयायिन कर्तुमुपक्रमते । तत्र शक्तिसिंहमानेतुमनुचरमाह्वयति—**क इदानी**मित्यादिना । दौवारिक प्रभुर्मामाह्वयति इति प्रतापभावमवगत्य प्रविश्य 'जयतु जयतु' इत्यादिना स्वागमन सूचयति । **भ्रातर**मिति । एतेन बहुमानपुरस्सर तमानयेति तदाशय । **देव** इति । अत्र देवो भवान् । **महाभाग्य**-महत् भाग्य यस्येति तत्सबुद्धौ । यतो महाराजस्त्वामाह्वयति, अतस्त्वमिदानीं

शक्ति०—दौवारिक ! तिष्ठ किंचित्कालं यावदहं सालुम्बं पितरं पृष्ट्वा समागच्छामि ।

दौ०—जहा तुम्हाणं आणा ।

यथा युष्माकम् आज्ञा ।

(शक्तिसिंह स्वप्राणरक्षकं पितरं सालुम्बमुपसृत्य प्रणम्योपविशति ।)

सालुम्बः—किमस्ति शक्तिसिंह ! अद्य ते मुखकान्तिरधिकतरं शोभमाना प्रतिभाति ।

प्रफुल्लपाथोजसमोज्ज्वलद्युति-
विशालनेत्रातिविकासभासुरा ।
कमप्यपूर्वं सुखसंपदागमं
मुखप्रभा ते ब्रुवतीव शोभते ॥ १ ॥

---

महाभाग्य एव संजात ।द्रष्टुमभिलषति—एतेन तस्मिन् आदरातिशयो व्यज्यते ।

**सालुम्बं पितर**मिति । सालुम्बाख्य पितरमित्यर्थ. ।एतेन आरोपित-पितृत्वमस्य सूच्यते । वास्तविकत्वे सालुम्बेत्यपार्थक स्यात् । तत्र आरोपितेषु अन्नदाता भयत्रातेत्यादिषु मध्ये कोऽयमिति अग्रे स्पष्टयति-'स्वप्राणरक्षक पितरम्'। अय प्राणरक्षक प्राणदातेव भयत्राता पिता । अतश्च स्वाभिमतसमृद्धिलाभेऽपि पितुराज्ञा विना नाहं समृद्धिं ग्रहीतुमभिलषामि इति हेतोस्त पृष्ट्वा तदाज्ञयैव गमिष्यामीति सूचयति । ततश्च पितुराज्ञाकारित्वं, 'मातृदेवो भव,पितृदेवो भव,आचार्यदेवो भव' इत्यादि प्राचीनपरपरागतश्रौतस्मार्तमर्यादापालकत्व चास्य बोध्यते । **प्रणम्ये**ति । पादस्पर्शपूर्वक प्रणाम कृत्वा तदासन्ने उपविशति, एष एव शिष्टव्यवहार ।

**सालुम्ब** इति । शक्तिसिंहस्य अनवसरे आगमनमुपलक्ष्य कथयति—**किमस्ति** इति। अथ स्वयमेव मुखस्यशोभातिशयमवलोक्य वक्ति—

**प्रफुल्ले**ति । प्रफुल्ल विकसित, यत् पाथोज कमलं, तेन समा उज्ज्वला-विकासातिशययुक्ता, द्युति दीप्ति , यस्या सा, तथा विशालनेत्रयोरतिविकासेन भासुरा-अत्यधिकदेदीप्यमाना । प्रसन्नतायामेव नेत्रे विकसिते भवत इति प्रसन्नताया असाधारणो हेतुरुपन्यस्त , ते तव, मुखप्रभा मुखकान्ति

शक्ति०—एवमेवैतत् । अत्र दौवारिकः समुपस्थितः। निवेदयति चायम्-तत्र महाराजः प्रतापो भ्रातरं शक्तिसिंहं द्रष्टुमभिलषति । अत्र भ्रातरमिति त्रीण्यक्षराणि मम हृदये कामप्यनिर्वचनीयामानन्दतरङ्गिणी-मुल्लासयन्ति ।

सालु०—गच्छ, किमतः परमपरं सुखस्थानं भविष्यति । अथ वा तिष्ठ, अहमेव त्वां नेष्यामि ।

( शक्तिसिंहमादाय सालुम्बो राजद्वारि उपतिष्ठते । )

---

'रसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः' इति सप्तधात्वतिरिक्तो वैद्यकशास्त्रे भावप्रकाशकारादिसम्मतः प्रभाख्यो धातुस्तमाश्रित्योक्त-मुखप्रभेति । कमपि-अनिर्वचनीयम्,अपूर्वम्-असाधारणं,सुखसंपदोरागमं-सुखसंपत्तिप्राप्तिं,ब्रुवतीव-साक्षात्कथयन्तीव, शोभते । अत्र पूर्वार्द्धेन मुखप्रभया सुखसंपदागमस्य अनु-मानविषयत्वेऽपि स्फुटतया तत्कथने समर्थनात्तस्या अलौकिककान्तिमत्त्वं द्योत्यते ॥ १ ॥

अथ शक्तिसिंहः कथयति-एवमेवेत्यादि । यत्त्वया निर्धारितं तत्तथैव । किं तदित्याह अत्र प्रतापप्रेषितो दौवारिकः कथयति । किं कथयतीति दर्शयति । तत्रेत्यादि । 'महाराजः' इति लब्धराज्याधिकार इत्यर्थः । भ्रातरं मां द्रष्टुमभिलषतीति इह भ्रातृत्वसम्बन्धेन स्मर्यमाणस्य मे सुखसंपदागमोऽ-वश्यमेव भविष्यति । तत्रापि भ्रातृत्वसंबन्धस्य उभयगतसाधारण्येन शाब्द-बोधान्वयजननात् आनन्दातिशयो जायते । स चैवम्—'प्रतापस्य अहं भ्राता मम प्रतापो भ्राता' इति स्मरतो मे हृदि आनन्दानां तरङ्गिणी उल्लसति । यथा तरङ्गिण्यामेकस्य कल्लोलस्य असमाप्तावेव द्वितीयः समुत्पद्यते एवमेव आनन्दपरंपरा मे हृदि समुत्पद्यन्ते ।

सालुम्बः कथयति-गच्छेत्यादि । अतः परमन्यत्सुखस्थानं किम्,यद् भ्रातृ-त्वसम्बन्धेन महाराजस्त्वां स्मरति ततो निश्चितैव सुखप्राप्तिरिति भावः । अथ वा-एकाकी स्वयमेव गमने न तथाभूत आदरातिशयो भविष्यतीति कृत्वा कथयति, तिष्ठ, अहमेव त्वां नेष्यामि' ततो मया पुत्रत्वेन रक्षितस्य तव मया स्थापनिकेव दाने तस्यात्मीयता त्वयि अधिका भविष्यति ।

दौ०—(प्रविश्य)जेदु जेदु महाराओ, सत्तिसीहसहिओ सालुम्बो
जयतु जयतु महाराज, शक्तिसिंहसहित सालुम्ब
समुवट्टिओ।
समुपस्थित।

प्रतापः—( कर्णमुद्दिश्य ) त्वं तावन्ममास्थानिकायां सालुम्बतातं शक्तिसिंहं चोपवेशय। अहमिदमावश्यकं पत्रमिन्द्रपुर-नरेशाय लिखित्वा समागच्छामि।त्वमपि तावत्तत्रैव तिष्ठेः।

( शुद्धविष्कम्भ )

( कर्ण निर्गत्य सालुम्ब प्रणमन्, शक्तिसिंह चालिङ्गन् आस्थानिकायामुपवेशयति, स्वय च तत्रैवोपविशति। )

कर्णः—भ्रातर्दिष्ट्या दृष्टोऽसि। तस्मिन्दिने तां पितुराज्ञामुपश्रुत्य

---

**शक्तिसिंहसहितः सालुम्बः**—सालुम्बस्यागमनात्त्वया तत्र गत्वा स आनेतव्य इत्यर्थ। प्रताप कार्यगौरवात्त-त्क्षणमेव गन्तुमशक्नुवन्स्वप्रतिनिधिं कर्ण प्रेषयति। तावत्पर्यन्त द्वारि स्थितौ सालुम्बशक्तिसिंहौ बहुमानपुरस्सरमुपवेशय—**आवश्यक**मिति। सालुम्बतातस्य शक्तिसिंहस्य च समागमादपि इन्दोर[1]नरेशसविधे पत्रप्रेषणम-त्यावश्यकम्, देशस्वातन्त्र्यसपादने साहाय्यजनकत्वात्। **सालुम्बं प्रण-मन्निति**। एष एव शिष्टव्यवहार –यत् वयोवृद्धेषु पादस्पर्शपूर्वक प्रणमनम्, समानवयस्केषु हृदयस्पर्शपूर्वक समादर। कर्ण प्रतापस्य लघुभ्राता। **आस्थानिकाया**मिति। आस्थाने सुखोपवेशस्थाने इत्यर्थ। **शुद्धविष्कम्भः**-तस्याय प्रकार —

'अपेक्षित परित्यज्य नीरसं वस्तुविस्तरम्।
यद्वा संदर्शयेच्छेष कुर्याद्विष्कम्भकं तदा॥'

स च शुद्धमिश्रभेदाद् द्विधा। नीचमध्यमपात्रमिश्रितो मिश्र। अमि-श्रित शुद्ध। अत्र च दौवारिकस्य नीचपात्रत्वाद्, अन्येषा चोत्तमत्वाद्, मिश्र।

---

१ 'इन्द्रपुर' इत्यस्य 'इन्दोर' इति प्राकृतम्। 'कगचजतद' इति पकार-लोपे 'सर्वत्र लवराम्' इति रेफलोपे 'आद्गुण.' इति गुणे 'इन्दोर' इति सिद्ध्यति।

**मे मनसि महानुद्वेगः संजातः, अहं तु त्वदीयां शौर्य-साहसशक्तिमवलोक्य समुत्पन्नरोमहर्षो विकसित-नयनश्चाभूवम्। को नाम त्वदतिरिक्तस्तथाभूता शौर्य-साहसपदवीमारोढुं शक्नुयात्।**

**शक्तिः—लौहकारसमर्पितः खड्गः पित्रा तूलराशौ परीक्षार्थं**

---

**भ्रात**रिति भ्रातृत्वसम्बन्धेन स्नेहसूचकं सबाधनपदम्। दिष्ट्या प्रारब्धेन, दृष्टोऽसि-अवलोकितोऽसि। चाण्डालहस्ते समर्पितस्त्व सालुम्बतातेन रक्षित· शुभप्रारब्धोदयादिदानीं दृष्टोऽसि। **तस्मिन्नि**ति। अत्यन्तानर्थजनकत्वादद्यापि स्मर्यमाणे तस्मिन्दिने। ताम्—वर्णनातीता प्राणनाशिनीम्। **पितु**रिति। पातीति पिता तस्य। पितु धर्मशास्त्रतो व्यवहारतश्च रक्षकस्य। एतेन तस्य तथाभूताज्ञाकरणमसभवमेवेत्यर्थ, नहि रक्षक क्वचिदपि घातको भवतीति तदाशय। **आज्ञा**मिति। अनुल्लङ्घनीयवचनमित्यर्थ। उद्वेग—त्वद्रक्षणे असामर्थ्यात्तदवलोक्येति-कर्तव्यताविमूढतया सभ्रम, त्वदीया त्वत्सम्बन्धिनीम्, शौर्यसाहसयो शाक्ति-सामर्थ्यम्। द्वन्द्वान्ते श्रूयमाण पदं प्रत्येकमभिसबध्यते। शौर्यविषयिणीं शक्तिम्—स्वाङ्गुलिच्छेदेऽपि मानसिकविकासातिशयेन स्वव्यापाररूपाम्, साहसशक्तिम्, स्वाङ्गच्छेदे स्वस्य दु खं भविष्यतीति विचारशून्याम् अवलोक्य—दृष्ट्वा, समुत्पन्न -सजात रोमहर्ष -रोमाञ्च यस्य स। विकासिते—आश्चर्यातिशयाद् विकासमाप्ते, नयने—नेत्रे, यस्य सः, तथाभूतोऽभूवम्। 'भुवो वुग्-'इति वुक्। **को नामे**ति। नामेति कोमलामन्त्रणे वितर्के विमर्शे वा कस्तावस्त्वदतिरिक्त—त्वद्भिन्न पुरुषोऽस्ति यस्तथाभूता स्वाङ्गच्छेद-कारकत्वाल्लोकोत्तरा, शौर्यसाहसपदवी—शौर्यसाहसयो· सरणिम्, आरोढुम्-किंचिदपि तथाभूतं शौर्य साहस वा कर्तु शक्नुयात्। एतेन अन्यकर्तृकतथा-भूतशौर्यसाहसयोरसभवान्न त्वत्सदृश कोऽपि शूरोऽस्तीति सूचित भवति।

शक्तिसिंह स्वस्य युक्तकारिता दर्शयन् स्वकीया प्रशंसा निरस्यति। तत्र प्रकृत दर्शयति—**लौहकारे**ति। लोहसजातवस्तुनिर्मापको लोहकार-जातीय, एतेन वशपरपरागतलौहवस्तुनिर्माणे तस्य कौशल्य सूचित

निपातितः। मया तु युक्तमेवाभिहितम्–यदस्य प्रयो-
जनं शत्रुशरीरे भविष्यति। अतः समानवस्तुनि परीक्षा
कर्तव्या। अत एव स्वाङ्गुलिं छित्त्वा परीक्षितोऽसिः।
परं तु न जाने पितुः किमर्थं दारुणः क्रोधः संजातः।

---

भवति। तेन समर्पित, अपूर्वमिद वस्तु इति बुद्धया उपायनीकृत, खड्ग– असि, पित्रा–जनकेन उदयसिंहेन,। **तूलराशा**विति। तूलस्य राशि समूह, तत्र। तूल स्वभावतोऽतिकोमलं भवति, ततश्च स्वल्पेनापि प्रयासेन तद्राशिरपि कर्तितु शक्यते। अथवा–कृत्यमानस्तूलराशिरतिकोमलत्वान्नम्री-भूतः सन्मनागपि कर्तितु न शक्यते, इति उभयथाऽपि वैषम्य सपद्यते। **परीक्षार्थ**मिति। अय खड्गो युद्धे शत्रुशरीरच्छेदको भविष्यति न वेति परीक्षितुमित्यर्थ। परं तु तूलराशिशत्रुशरीरयोर्विभिन्नगुणविषयत्वात्तूल-राशि परीक्षास्थानं भवितु नार्हतीति भाव। **निपातित** इति। पूर्णवेगेन यावद्बल तत्र पातित। न खलु युद्धे संग्रामभूमौ तथाविध खड्गो निपातयितु शक्यते। अत सर्वथा परीक्षणमयुक्त तेन कृतमिति तात्पर्यार्थ। **मये**त्यादि। युक्तम्–उचितम्। अभिहित–कथितम्। किमभिहितमित्याह–**यदस्ये**त्यादि। अस्य–खड्गस्य। प्रयोजनस्थान दर्शयति–शत्रुशरीरे इत्यादि। परीक्षाया विषयतामाह—**समानवस्तुनी**ति। प्रयोजनविषयीभूतवस्तुसमानगुणवदेव वस्तु परीक्षास्थान भवतीत्यथ। **अत एवे**ति। यस्मात्प्रयोजनविषयीभूत शरीर-मस्ति। अत कस्मिंश्चिदपि मनुष्यशरीरे परीक्षा कर्तव्या। विशिष्ट शुद्धान्ना-तिरिच्यत इति सिद्धान्तात्। शरीरे परीक्षित वस्तु शत्रुशरीरेऽपि प्रयोजन-जनकमेवेति भाव। **स्वाङ्गुलि**मिति। निरपराधिन शरीरे छेदानौचित्यात्स्वस्य आत्मन, अङ्गुलिम् अङ्गुलिप्रदेशमित्यर्थ। छित्त्वा-कर्तित्वा। असि खड्ग, परीक्षित· अथ स्वस्य सर्वथा औचित्यकारिता प्रदर्श्य पितु क्रोधहेतुं परामृषति। **परं त्वि**ति। क्रोधहेतोरभावात्। **न जाने** इति। अकर्मकाच्चेति ज्ञाधातोरा-त्मनेपदम्। अद्यापि क्रोधकारण नाहमवगच्छामि। पितु.–पालकस्य। **दारुण** इति। स्वाङ्गुलिच्छेदे पितुरपि मानसिकदु खजनकत्वात्साधारण क्रोधो भवेत्पर तु प्राणघातक क्रोधो नैव भवितुमर्हतीति तदाशयः।

कर्णः—हृदयदौर्बल्यात्स ते साहसं द्रष्टुमपि नापारयत्। आः!
को नाम स्वसुते तथाविधमाज्ञापयेत्। अस्थाने तेन क्रोधो विहितः।

शक्कि०—ममादृष्टमेव कारणम्, न किमपि तेषु वक्तव्यम्।
यतः—

पूज्यानां चरितानि वाच्यपदवीं नायान्ति लोके क्वचित्
कन्याया यतिवेषतोऽपि हरणे पार्थो बुधैः स्तूयते।
ज्ञात्वेत्याचरितं दुरोदरमिदं भीमाग्रजेन स्वयं
धर्मात्मा स निगद्यते, पितरि तज्ज्ञात्वैव संतुष्यते ॥ २ ॥

---

कर्ण क्रोधकारणं निर्दिशति **हृदयदौर्बल्या**दित्यादिना। हृदयस्य-मनसो दौर्बल्यात्, न अपारयत्–न अशक्नोत्। अथ पुन. प्राणदण्डस्वरूपस्य क्रोधस्य कारणता निरस्यति–**तथाविधमित्यादिना**। तथाविध प्राणदण्डकारकम्। **अस्थाने** इति। क्रोधस्य अनधिकरणे इत्यर्थ। यद्वा–अस्थाने–अनवसरे इत्यर्थ। अयं भावार्थ–हृदयदौर्बल्यस्य क्रोधकारणत्वेऽपि प्राणदण्डस्वरूपस्य क्रोधस्य अकारणत्वात् शक्किसिंह स्वस्य अदृष्टमेव कारणं मन्यमान कथयति—**ममादृष्टमेवे**त्यादि। अदृष्टमिति पूर्वकर्मोपार्जिनधर्माधर्मादिजन्य कर्म। तच्च फलबलाज्जायमानं सामान्यापराधिन विशेषापराधित्वे परिणमयति। **न किमपीति**। तेष्विति पूज्यत्वाद् बहुवचनम्। तस्मिन् पितरि, किमपि नैव वक्तव्यम्। दोषसत्त्वेऽपि पूज्यत्वात्ते दोषविषयतया नैवोच्यन्ते। तदेव दर्शयति। यतः–यस्मात्कारणात्।

**पूज्याना**मिति। लोके–जातित्वादेकवचनम्, लोकेषु सूक्ष्मविचारशून्येषु जनेषु। यद्वा-लोके–संसारे क्वचिदपि पूज्याना-पूजनीयाना महात्मनामित्यर्थ, चरितानि-कृत्यानि, वाच्यपदवीं वाच्यस्य निन्दाविषयतया कथनीयस्य, पदवीं-स्थान, न आयान्ति न प्राप्नुवन्ति। तदेव दृष्टान्तद्वारेण समर्थयति—**कन्याया** इति। कन्याया –अनूढाया, एतेन तस्याहरणे महापातकित्वं सूचितं भवति यतिवेषत, यते संन्यासिनो वेषतः बाह्याडम्बरेण, एतेन विश्वासयोग्यता तस्य दर्शिता भवति। हरणे-हठात् गृहीत्वा पलायने। एतेन महानर्थकारित्वं

सालुम्बः—नैवम्-अस्त्यत्र कश्चिद् गूढाभिसन्धिः, यत्केनापि दैवज्ञेन विज्ञापितमासीत्त्वात्पित्रे, यदस्य शक्तिसिंहस्य कृते स्वजन्मभूमेर्हानिर्भ्रातुः प्राणरक्षा च संपत्स्यते, इति स्वजन्मभूमेर्हानिभयात्तदूहननाय समयमवलोकयन्निव स स्वसमीपे तद्विधानमौद्धत्यं मन्यमानस्तथा विज्ञापितवान् ।

---

तस्य सूचित भवति । तथाहि—पूर्वं कन्याया हरणमेवानर्थजनक तत्रापि अन्यवेषत अथापि यतिवेषत । पुनरपि हरण—हठात् गृहीत्वा पलायनम्, एव सत्यपि, पार्थ -पृथाया अपत्य पार्थोऽर्जुन , बुधै —विद्वद्भि , स्तूयते—प्रशस्यते, साधारणपुरुषै प्रशंसनं तु कथंचिद्भवेदपि पर तु स तु बुधै स्तूयते, अत एवोच्यते पूज्याना चरितानि वाच्यपदवीं नायान्तीति । अन्यदप्याह—भीमाग्रजेन—युधिष्ठिरेण, इद दुरोदर—दुष्टमुदरं यस्येति दुरोदर दुष्परिणाममिति ज्ञात्वा स्वयम् आचरितम् , न तु परंपरया केनापि द्वारा सेवितम् । स युधिष्ठिर , धर्मात्मा-धर्ममूर्तिर्धर्मस्वरूप निगद्यते । पितरि—पितृविषये, तज्ज्ञात्वैव संतुष्यते । अय भाव —यथा युधिष्ठिरो द्यूतसेवनेनापि धर्मात्मा निगद्यते तथा पिता उदयसिंहोऽपि पुत्रप्राणदण्डकारक उचितकार्येवेति भाव । अत्र अनुचितकार्यकारित्वात्तेषा निन्दा व्यज्यते ॥ २ ॥

अथ तदविक्षेपमवगच्छन्सालुम्ब कथयति—नैवमिति। यथा अङ्गुलिच्छेदापराधात्प्राणदण्डोऽनेन विहित इति भवद्भिरवगम्यते न तथाऽस्ति । किन्तु अत्र प्राणदण्डविषये कश्चित्प्रधानभूतो गूढ —अत्यन्ततिरोहित , अभिसन्धिर्मारणेच्छाविषयक रहस्यमस्ति । किं तदिति दर्शयति—यत्केनापीत्यादिना । स्वजन्मभूमेरिति । स्वस्य जन्मभूमेर्जन्मस्थानस्य, हानि.—क्षयः, भ्रातु —चतुर्विंशतिसंख्याकेषु भ्रातृषु मध्ये कस्यचिदपि भ्रातुः प्राणरक्षा च भविष्यति । अत्रैतेन कार्यद्वयेन चतुर्थाङ्कगतं शक्तिसिंहकृतं सेनाभेदकथनं, प्रतापसंरक्षणं च बीजरूपेण उपक्षिप्यते । अथ पूर्वोक्तकार्यद्वयमध्ये आद्यकार्ये फलं दर्शयति । इतीति । यस्माच्छक्तिसिंहकृते स्वजन्म-

---

१ धर्मो विवर्धतु युधिष्ठिरकीर्तनेन ।

कर्णः—एतन्मात्रापराधात्तत्सन्देहमात्रतश्च स्वसुते तथाभूताज्ञाकरणं कथं संभवति।

सालु०—अन्यदपि कारणम्—विचारितं तेनासीत् - यज्जगन्मज्ञाय राज्यप्रदानसमये अतिशयितविक्रमशौर्यसाहसशोभमानोऽयमेव मे परिपन्थी भविष्यतीति तेन तथाऽऽचरितम्।

कर्णः—युज्यते चैवम्। ततः।

सालु०—पुनर्मया यथाकथंचित्प्रतिज्ञाय प्रतिबोधितः, नायं तवाज्ञायाः प्रतिकूलं समुपस्थास्यते।

कर्णः—ततस्ततः।

---

भूमेर्हानिरिति हेतोः स्वजन्मभूमेर्मेवाडस्य, हानिभयात्—हानिशङ्कया, तस्यशक्तिसिंहस्य, हननाय समयमवलोकयन्निव-हननसमयं प्रतीक्षमाण इव, स उदयसिंह, स्वसमीपे-आत्मसन्निधौ, तद्विधानम्—अङ्गुलिच्छेदकरणरूप कार्यमौद्धत्यं, मन्यमान, तथा-यथा अस्य प्राणदण्डो भवति तथा विज्ञापितवाच् आज्ञापयामासेत्यर्थ।

अथ कर्णोऽङ्गुलिच्छेदापराधात्स्वजन्मभूमेर्हानिभयाच्च प्राणदण्डाज्ञेति परिहरति—**एतन्मात्रे**ति। एतन्मात्र एव—अङ्गुलिच्छेदपरिमित एव, योऽपराधस्तस्मात्, अथ वा—तस्या.-स्वजन्मभूमिहाने, सन्देहमात्रत.—केवलसदेहाच्च। संदेहो नाम विरुद्धकोटिद्वयावगाहिज्ञानम्। तद्यथा अस्माज्जन्मभूमेर्हानिर्भविष्यति न वेति संशयात्। स्वसुते—आत्मपुत्रे। तथाभूताया प्राण दण्डस्वरूपाया., आज्ञायाः करणम्—आज्ञादान, कथ सम्भवति, नैतावताऽपराधेन सदेहाद्वा प्राणदण्डाज्ञा भवितुमर्हतीति भाव।

पुन सालुम्ब कारणान्तरं दर्शयति—**अन्यदपी**त्यादि। सुगमम्। अथ कर्ण पूर्वोक्त कारण दृढं मन्यमान कथयति—**युज्यते चैव**मिति। एव कारणेन तु प्राणदण्डाज्ञाकरण युक्तियुक्त भवति। अथ सालुम्ब स्वकृता तद्रक्षा दर्शयति—**पुनर्मये**त्यादिना। यथाकथचित्-महता प्रयासेने-

सालु०—ततो मयोक्तम् निस्संतानोऽहमित्येनं मह्यं देहीति यथाकथंचित्तेनायं दत्तः ।

( तत. प्रविशति दौवारिकद्वितीयः प्रताप । सर्वे उत्तिष्ठन्ति । )

(प्रताप· प्रविश्य सालुम्ब प्रणमति, शक्तिसिंहं हृदयेन आलिङ्गति ।)

( पुनर्यथास्थान सर्वे उपविशन्ति। )

प्रतापः—शक्तिसिंह ! दिष्ट्या सालुम्बेन रक्षितोऽसि। अयं ते प्राणरक्षकः पिता ।

चाण्डालहस्तेषु समर्पितं त्वां
को नाम निष्काशयितुं समर्थः ।
धैर्यक्षमाशालिमनाः प्रवीरः
सालुम्बतातो यदि नान्तरा स्यात् ॥ ३ ॥

---

त्यर्थ. । निःसन्तानोऽहमिति । निर्गत सन्तान. सन्ततिर्यस्मात्, सन्तते-र्मरणादनुत्पत्तेर्वा। दौवारिकद्वितीय इति। दौवारिक एव द्वितीयो यस्येति । अन्यसामन्तादिरहित इत्यर्थ । अथ प्रताप. शक्तिसिंह कथयति । शक्ति-सिंह! त्वं दिष्ट्या शुभकर्मोदयात् रक्षितोऽसि । प्राणरक्षक इति । अयं तव भयत्राता पिताऽस्ति । तदेव दर्शयति—

चाण्डालेति । चाण्डालाना हस्तेषु एकस्य चाण्डालस्य हस्तात् अनुनयपारितोषिकदानसाहसादिना निष्काशयितु शक्यतेऽपीति बहूना चाण्डालाना हस्तेभ्य कथमपि नैव निष्काशयितुं शक्यते । समर्पितं-सम्यक् प्रकारेण अर्पित, स्वकीयविश्वस्तपुरुषद्वारेण दत्त, त्वा को नाम निष्काशयितु चाण्डालहस्तेभ्यो रक्षितुमित्यर्थ. । समर्थोऽस्ति । अद्यापि तथाभूतसामर्थ्यवान्नास्तीत्यर्थ । यदि धैर्य-व्यवसाये स्थिरता, उक्त हि 'व्यवसायादचलनं धैर्यं विघ्ने महत्यपि"। क्षमा-सहिष्णुता, ताभ्या शालि -शोभमानं, मनो यस्य स । एतेन उचितानुचितकथनेऽपि तत्सहनपूर्वकमस्य अवश्यकार्यकारित्वं बोध्यते । तथा प्रवीर.-प्रकृष्टो वीर. प्रवीर, एतेन शौर्यपूर्वकमपि अस्य कार्यसंपादने शक्तिर्बोध्यते । सालुम्बतात.-पूज्यत्वाद् वृद्धत्वाच्च तातस्थानीय सालुम्ब, पितु समकालिकोऽयं सामन्त । अन्तरा

शक्ति०—एवमेवैतत् ।

प्रता०—सालुम्ब ! किमाज्ञापयत्येनम् ।

सालु०—( मनसि ) ममौरसः पुत्रः संजात एव। अयमत्र स्थितः परमैश्वर्यभोक्ता भवतु ।
(प्रकाशम् )अयं ते स्थापनिका। यथा भवद्भ्यो रोचते ।

प्रता०—अयमस्मत्सविधे स्थितोऽस्मदीयसव्यबाहुरिव सर्वकार्येषु सहायको भवतु ।

सालु०—एवं सति

दृप्यद्विपक्षक्षितिपालसेना—
समुद्रकुम्भोद्भवतुल्यशक्तिः ।

---

मध्ये न स्यात्—न भवेत्। 'यदायद्योरुपसंख्यानम्'इति लिङ्। सालुम्बतातस्य मध्ये आगमनादेव त्व चाण्डालहस्तात् रक्षित इति भाव ॥ ३ ॥

शक्तिसिंह कथयति—**एवमेवेति** । यथा भवद्भिरुक्तम्, एतदेवमेव । सालुम्बतातेनाह रक्षितोऽस्मीति मे प्राणरक्षकत्वात्पितैवेत्यर्थ. । **किमाज्ञापयतीति** । किमयं भवता रक्षितो भवत्पुत्रस्थानीयो भवत्सविधे तिष्ठतु, किं वा तवौरस पुत्रो जात इति कृत्वा मम सविधे तिष्ठतु । **स्थापनिकेति** । यथ स्थापनिकाया रक्षकस्य तद्ग्रहणे नाधिकारो भवति, एवमस्य विषयेऽपि मम नाधिकार , अय तवैवेति भाव. । **यथा भवद्भ्य इति** । यदि एतद्रक्षणे पुनरपि मामाज्ञापयन्ति भवन्तस्तदाऽहं तथा विधास्यामि, अथात्मीयस्थापनिकावदिमं ग्रहीतुमिच्छन्ति तदा गृह्णन्तु इत्युभयप्रकारयोर्मध्ये यथा रोचते । भवद्भ्य इत्यत्र ' रुच्यर्थानां प्रीयमाण. ' इति चतुर्थी ।

**दृप्यदिति** । दृप्यन्त —दर्पयुक्ता , विपक्षा.—शत्रुभूता., ये क्षितिपाला —राजान ,तेषा या सेना सैव समुद्रस्तत्र,कुम्भोद्भवेन—अगस्त्येन,तुल्य.-समान , शक्ति· शक्तिसिंह , चेद्—यदि, तव सहाय —तवानुचर. सन् तिष्ठेत्, तदा अयं विपक्षभूतत्वेन प्रत्यक्षविषयीभूतो वराकोऽकिञ्चित्करो यवनाधिपोऽकबर

तिष्ठेत्सहायस्तव चेत्तदाऽयं
किया‌न् वराको यवनाधिपः स्यात् ॥ ४ ॥

प्रता०—अस्त्वेवम् । मदभिन्नशरीर एवासौ तिष्ठतु ।

एतद्रक्षणपारितोषिकविधौ ग्रामास्त्वदर्थे मया
दीयन्ते दश, तेषु तिष्ठतु भवत्संतानसत्ता सदा ।
किं ते चाप्यपरं करोमि कुशलं पुत्रस्त्वदीयो मम
भ्रातॄणां समतां व्रजेच्च पदवीं राजेति संप्राप्नुयात् ॥५॥

सालु०—अनेन तवौदार्येण यावद् वंशपरंपरं क्रीतोऽस्मि ।

शक्तिः—महाराज! श्रूयते राज्यलोभात्सगरसिंहो म्लेच्छराजमुपगतः ।

प्रता०—आः! कोऽयं वराकः। गच्छतु, किमनेनापह्रियते। पश्य-

भ्रात्रा केवललक्ष्मणेन सहितो रामोऽजयद् राक्षसान्
भीमाद्यैर्मिलितश्चतुर्भिरपरैर्जेताऽभवत्पाण्डवः ।

---

किया‌न्—कियत्परिमाण स्यात् । यथा अगस्त्य क्षणेन समुद्रमशोषयत्तथैवायमपि विपक्षसेना क्षणेन नाशयिष्यतीत्यकिञ्चित्कर एवाकबरो भविष्यतीति भाव ॥ ४ ॥

एतद्रक्षणेति । सुगमम् । भ्रातॄणा समतामित्यत्र 'तुल्यार्थैरतुलोपमाभ्या तृतीयाऽन्यतरस्याम्'इति षष्ठी । राजेतिपदवीप्रदानसमर्थस्यास्य महाप्रभावशालित्व द्योत्यते ॥ ५ ॥

अनेनेति ग्रामदानराजपदप्रदानरूपेणौदार्येण । यावद्वंशेति । 'यावदवधारणे' इति समास । यावत्पर्यन्त मे वशपरम्परा तावत्पर्यन्त क्रीतोऽस्मि न मे भाविनी सन्ततिरपि तवानुगामित्वं त्यक्ष्यतीति भाव । राज्यलोभादिति । राजस्य लोभात्—अनुचिताभिलाषात् । म्लेच्छराजमिति । म्लेच्छाना-प्रत्यन्तदेशवासिना राजा, न त्वस्माकमपीत्यर्थ । तमुपगत तत्सविधे प्राप्त । मा म्लेच्छराज साहाय्यदानेन मेवाडदेशाधिपतिं विधास्यतीत्यभिलाषया तद्दासता प्राप्त इति भाव ।

प्रताप. सक्रोध कथयति—आः!कोऽयमिति । आ इति क्रोधसूचकमव्ययम्।

युक्तो बन्धुभिरब्धिविंशतिगणैर्हं स्यां रणे संगतो
म्लेच्छाधीशसमस्तसैन्यहनने द्वित्रा भवेयुः कलाः ॥ ६ ॥

सालु०—एवमेवैतत्।

शक्ति०—स्नानकालातिपातः संजातः। पश्य—

ताप संजनयन्स्मृतिं कवलयंस्तर्षं समुल्लासयन्
दृष्टिं संभ्रमयन्मनो विकलयन् स्वेदाम्बु संचारयन्।

---

अथ सगरसिंहो वराकोऽकिञ्चित्कर क ,न कुत्रापि गणनीय सामर्थ्यशून्यत्वात्। अनेन गतवता सगरसिंहेन किम् अपह्रियते, न किञ्चिदप्यनिष्ट विधातु शक्यत इति भाव । पश्य—अन्त करणेन विचारय।

भ्रात्रेति। केवललक्ष्मणेन-लक्ष्मणमात्रसहायकेन,भ्रात्रा-बन्धुना,सहितो युक्तो, रामो रामचन्द्रो, राक्षसान् खरदूषणादीनजयत्—जितवान्। तथा अपरै - नास्ति पर श्रेष्ठो येभ्यस्ते तै । यद्वा—न परैरपरै । अभिन्नैरित्यर्थ । चतुर्भिश्चतु सख्याकैर्भीमाद्यैर्भीमार्जुननकुलसहदेवैर्मिलित पाण्डव -युधिष्ठिर , जेताऽभवत् , अजैषीदित्यर्थ । यद्यपि पाण्डवपदेन पञ्चाना ग्रहण तथापि प्राधान्यात् युधिष्ठिरस्यैवात्र ग्रहणम् ,यद्वा-'भीमाद्यैर्मिलित 'इत्यनेन भीमादीना सहकारितया ग्रहणात्पारिशेष्याद् युधिष्ठिरस्यैवात्र बोधः। अत्र 'मिलित ' इत्यनेन अभिन्नतया स्थित इति सूच्यते । एतेन भीमादीना मध्येऽन्यतमस्य नाशे युधिष्ठिरस्य स्वत एव नाशो भविष्यतीति सूचित भवति । तथैव तस्य व्यवस्थास्थिते । एवम् अब्धिविंशतिगणैश्चतुर्विंशतिसख्याकैर्बन्धुभिर्भ्रातृभिर्युक्त , हम्-अहम्, हमिति अहमर्थबोधकमव्ययम्। यदि, रणे-सग्रामे, संगत मिलित , स्या, तर्हि म्लेच्छाधीशस्य—अकबरस्य, समस्तसैन्यहनने—सम्पूर्णसेनाविनाशे, द्वित्रा द्वौ वा त्रयो वा द्वित्रा , कला घटिका भवेयु । हेतुहेतुमतोर्लिङिति लिङ् ॥ ६ ॥

शक्तिसिंहो मध्याह्नसमयमवलोक्य कथयति—**स्नानकाले**ति । स्नानकालस्य—माध्याह्निकस्नानकालस्य, अतिपात -समयातिक्रम , सजात -अभूत्।

तमेव मध्याह्नसमय वर्णयति—**ताप**मिति। ताप—सताप, संजनयन्—सम्यक् प्रकारेणोत्पादयन्, स्मृतिं—स्मरणशक्तिं, कवलयन्—कवलीकुर्वन्,

भूमिं संज्वलयन्नपोऽपचययन् पान्थान्समुत्सारयन्
वह्निं सङ्घटयन् मृगानसितयन् सूर्यः समुज्जृम्भते ॥ ७ ॥

प्रता०—आम् , कथानुकथनेनाज्ञात एव बहुकाल संजातः ।

( तत सर्वे उत्तिष्ठन्ति । सालुम्बशक्तिसिंहकर्णा निष्क्रामन्ति । )

प्रतापः—( किञ्चित्परिक्रम्य नि श्वस्य च अकबरं लक्ष्यीकृत्य कथयति । )

रे म्लेच्छाधिप ! दुर्विनीत ! फलितः कौटिल्यजालाकुलो
दिष्ट्या रूढपदस्त्वया विरचितो भेदप्रयोगः स्वतः ।

---

अतिसतापवशात्स्मरणशक्तेर्ह्रासो भवति । तथा तर्ष-पिपासा, समुल्लासयन्-वर्धयन्, 'उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम्' इत्यमर. । दृष्टिं-दर्शनं ज्ञानं वा सभ्रमयन्-अतद्वति तत्प्रकारतयोत्पादयन्,मरीचिकाजननात्, अत्यन्तसंतापतयोद्वेगजननेनान्यथा बोधोदयाद्वा । तथा मनो-मानस, विकलयन्-व्याकुलं कुर्वन्, खेदाम्बु-खेदजलं, संचारयन्-प्रवाहयन्, भूमिं-पृथ्वीं, संज्वलयन्-अत्यन्तसतप्ता कुर्वन्, अपो-जलानि, अपचययन्-अपहारं कुर्वन्, 'अपाहारस्त्वपचय' इत्यमर । पान्थान्-पथिकान्, समुत्सारयन्-प्रतिरोधयन्, अत्यन्तघर्मोदयात्पथिकाना गतिप्रतिरोध कुर्वन् । वह्निं सघटयन्-सूर्यकिरणानामतिसंतापवशात् वह्ने प्रतीतिमिव जनयन्, मृगान् असितयन्-श्यामं कुर्वन्, सूर्य समुज्जृम्भते-उदयमान सूर्य प्रचण्ड सन्नूर्ध्वमायातीति भाव. । अत्र प्रतिचरणं पूर्ववाक्येषु घटादीना मध्यवाक्येषु नामधातूना प्रयोगा इति न भग्नप्रक्रमता ॥ ८ ॥

तत्कौटिल्यं स्मरन्क्रोधावेशवशात्तमभिलक्ष्य कथयति प्रताप —रे म्लेच्छाधिपेति। रे इति असदामन्त्रणे,म्लेच्छाना भक्ष्याभक्ष्यादिविवेकशून्यानाम्, अधिप प्रभुस्तत्सम्बुद्धौ, एतेन महापापाचारित्वमस्य द्योत्यते । दुर्विनीत! एतेन स्वार्थसाधकशीलत्वमस्य बोध्यते । कौटिल्यजालेन-मायाप्रपञ्चेन, आकुलो-व्याप्तः,सर्वतोभावेन कौटिल्यप्रपञ्चितः, त्वया-अकबरेण,हृदिस्थत्वात् क्रोधावेशवशाच्च साक्षात्सन्मुखस्थितमिव मन्यमानेन युष्मत्शब्दप्रयोग कृत ।विरचितः-कोऽपि शिशोदियावंशीयः प्रतापविरुद्धस्सन्नस्मत्सविधे समायात्विति निर्मितो भेद·प्रयोग., दिष्ट्या त्वदीयशुभप्रारब्धोदयात्, रूढ-संजात,पदं स्थान यस्य

यल्लोभोपहतस्त्वदीयशरणेऽभून्मे पितृव्यः स्विकां
मर्यादामपहाय पूर्वपुरुषायातां श्ववृत्त्या स्थितः ॥ ८ ॥

दौवारिकः—(प्रविश्य) जेदु जेदु महाराओ। आगराणयरा
जयतु जयतु महाराज. । आगरानगरात्
आयादो भद्दमुहणामा चारणो दुआरि चिट्ठइ
आयातो भद्रमुखनामा चारणो द्वारि तिष्ठति।

प्रता०—( मनसि ) तन्नगरवृत्तान्तज्ञानाय प्रेषितश्चरोऽयम्।
( प्रकाशम् ) तं प्रवेशय।

( तत प्रविशति तेन सह दौवारिक । )

प्रता० —दौवारिक ! त्वं स्वनियोगमशून्यं कुरु।

( ततो निष्क्रामति दौवारिक । )

प्रता०-भद्रमुख ! स्वगमनात्प्रभृति कथय आगरानगरवृत्तान्तम्।

भद्रमु०—सुणोदु महाराओ। पुव्वं अकबरेण अप्पाणं आरियं
श्रृणोतु महाराज । पूर्वमकबरेण आत्मानमार्यं
छत्तिअं संपावइउं बम्हणा कहिया। तओ तेहिं बम्हणेहिं
क्षत्रिय सप्रापयितु ब्राह्मणा कथिता । ततस्तैर्ब्राह्मणै
कहिअं। पुव्वकम्मणो पहावेण जहा राया वा धणिओ
कथितम्। पूर्वकर्मण प्रभावेण यथा राजा वा धनिको

---

स तथा आरोपितपद सन् स्वत एव त्वदीयव्यापारनिरपेक्ष एव फलित सफलता गत । तमेव भेद दर्शयति । यत् लोभेन उपहत—लोभोपहतः राज्यलिप्सया युक्तो मे, पितृव्य—पितुर्भ्राता, सगरसिंह, पूर्वपुरुषायाता—वशपरपरानुगता, स्विका—स्वकीया, मर्यादा—स्वाधीनतारूपा स्थितिम्, अपहाय त्यक्त्वा, श्ववृत्त्येति अधर्मवृत्तिमेव सेवावृत्तं मन्यमान कथयति' श्ववृत्त्या त्वधीनवृत्त्या स्थितः सन् त्वदीयशरणेऽभूत्। अयमेव भेदो यन्मे पितृव्यो राजलिप्सया त्वत्सविधे प्राप्त. ॥ ८ ॥

आगरेति । अकबरनिवासस्थानात् स्वनामख्यातात्पत्तनात् ।

वा रंको वा होइ, एवं चेव पुव्वकम्मणो पहावेण
वा रङ्को वा भवति, एव चैव पूर्वकर्मण प्रभावेण
बम्हणो वा छत्तिओ वा सुद्दो वा होई। पुव्वकम्मा-
ब्राह्मणो वा क्षत्रियो वा शूद्रो वा भवति। पूर्वकर्मा-
णुगयां णिच्चां जाइं ण कोऽवि परावट्टिउं समत्थो।
नुगता नित्या जातिं न कोऽपि परावर्तितु समर्थ ।

---

पूर्वकर्मेति। पूर्वजन्मकर्मप्रभावेण अनु पश्चादस्मिन् प्राप्ता, नित्यम्, अविनाशिनीम्—अप्रच्युतामुतपन्नस्थिरैकरूपा, जातिं न कोऽपि, परावर्त्तितु-शूद्रा जातिं क्षत्रिया विधातु, शक्य । जातेर्नित्यत्वात् न तत्परावर्तनं भवतीति भाव । ननु 'चातुर्वर्ण्यं मया सृष्ट गुणकर्मविभागश ' इति प्रामाण्यात् क्षतावविन्त्राणकर्तृत्वरूपा कर्मानुसारिणी क्षत्रियजाति सिध्यतु। चातुर्वर्ण्य—मस्याय भाव । गुणकर्मविभागेन चातुवर्ण्यं सृष्टमिति चेन्न, चातुर्वर्ण्य—मस्याभिप्रायापरिज्ञानात्। तच्चैवम्—चातुर्वर्ण्यस्य सृष्टौ कर्तृत्वं कस्येत्याकाङ्क्षाया मयेति पदबोधस्य ईश्वरस्येति भवद्भिरपि वक्तव्यम्। अन्यथा मयेत्यपार्थक स्यात्, गुणकर्मणोरचेतनत्वेन चातुर्वर्ण्योत्पादने सामर्थ्याभावाच्च। मया कृष्णेन जगन्नियन्त्रा ईश्वरेण गुणकर्मणी विभज्य चातुर्वर्ण्यं सृष्टम्। यथा दयादाक्षिण्यादय स्वाभाविका गुणा । यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहा कर्माणि ब्राह्मणानाम् । एवं क्षत्रियादीनामपि गुणकर्मणी विभक्ते एव। एतदशे एवास्य तात्पर्यम्। किञ्च—यदि कर्मानुसारिण्येव जातिरित्यभिनिवेशस्तदा जीवस्य गर्भागमनसमये पूर्वजन्मकालिक कर्मादायैव ब्राह्मणादिजातौ जीव समुत्पद्यते इति जायमानो बालो ब्राह्मण क्षत्रिय इति व्यवह्रियते। उक्त हि छान्दोग्ये पञ्चमेऽनुवाके। "तद्य इह रमणीयचरणाभ्यासो ह यत्ते रमणीया योनिमापद्येरन्, ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणाभ्यासो ह यत्ते कपूया योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा।" इति। एतदेवाभिप्रेत्य न्यायदर्शनसूत्रेऽप्युक्तम्—'पूर्वकृतफलानुबन्धात्तदुत्पत्ति ' इति। मनुनाप्येवमेवोक्तम्—"शरीरजै. कर्मदोषैर्याति स्थावरता नर । वाचिकै. पक्षिमृगता मानसैरन्त्यजातिताम्"। इत्यत्राशेऽस्य भाव सभवति न तु

प्रता०—साधु साधु! विद्वद्भिर्युक्तियुक्तं शास्त्रमर्यादानुगतमेवोक्तम्। ततस्ततः।

भद्र०—तओ तेहिं बम्हणेहिं कहियं, जहा तुमं दाणप्पहावेण
ततस्तैर्ब्राह्मणैः कथितं, यथा त्वं दानप्रभावेण

---

जायमानस्य ब्राह्मणादेः परावर्तनम्। किञ्च-गुणकर्मणोश्चातुर्वर्ण्येन सह कः सम्बन्ध इति जिज्ञासायां द्रव्यद्रव्ययोरेव संयोग इति नियमेन संयोगाभावाद् अवयवावयविनोरिव गुणगुणिनोः क्रियाक्रियावतोश्च नित्यः समवाय एव संबन्ध इति मन्तव्यम्। ततश्च ब्राह्मणगुणानां न ब्राह्मणात्पार्थक्येनावस्थानं संभवति। एवं च ब्राह्मणोत्पत्तिसहकृता एव ब्राह्मणगुणा उत्पद्यन्ते, नहि दयादाक्षिण्यादयो गुणा आत्मगताः सन्तो ब्राह्मणस्यात्मन उत्पत्त्यनन्तरं स्थापयितुं शक्यन्ते। नापि विभिन्नगतास्ते गुणा इति कथमपि साधयितुं पार्यते। नापि ब्राह्मणस्यात्मनि अविद्यमाना गुणा अन्यस्थानादागत्य ब्राह्मणत्वं साधयन्ति। किन्तु सहैव गुणाः समुत्पन्ना, एवं कर्मापि। अन्यकर्मकर्तृत्वे तु अनधिकारचर्चैव विधीयते नतु ब्राह्मणत्वं विहन्यते। अत एव 'अष्टवर्षमुपनयीत तं चाध्यापयीत' इत्यादि संगच्छते। इत्यलमत्र बहूक्तेन, इति प्रासङ्गिकत्वात्समयोपयोगाद् व्याख्यातम्। अथ प्रकृतमनुसरामः।

प्रतापः कथयति—**विद्वद्भिः**-श्रुतिस्मृतिपुराणतत्त्वज्ञैः, अत्र बहुत्वात् सर्वैरप्यैकमत्येनेत्यर्थ इति बुध्यते, युक्त्या युक्तं—तर्कस्यानुकूलम्, शास्त्राणां—श्रुतिस्मृतिपुराणानां, मर्यादायाः—आप्तपुरुषव्यवहारस्य, च अनुकूलमेवाभिहितम्, न खलु तेषामुक्त्या शास्त्राण्याप्तव्यवहारश्च भिद्यन्ते इति। 'आप्तवचनं वेदाश्च प्रमाण'मिति वदता न्यायसूत्रकारेण आप्तवचनस्य वेदवत्प्रामाण्यं स्वीकृतमिति तैर्विद्वद्भिरपि तदनुकूलमेवोक्तमित्यर्थः। **दानप्रभावेणेति**। प्रत्येककर्मणो विभिन्नफलजनकत्वाद् दानकर्मणः फलं धनिनां कुले समुत्पत्तिः।

ननु दानादिशुभाध्यवसायवशाद् यथा राजराजेश्वरस्य गृहे जन्म एवमेव तस्मादेव शुभाध्यवसायाद् ब्राह्मणस्य क्षत्रियस्य वा गृहे जन्म कथं न जातमिति तद्विविच्य प्रदर्शयति—

राया भूओ एव्वं चेव विवेअपरिच्चाएण कपूआ-
राजा भूत, एवमेव विवेकपरित्यागेन कपूया-
यरणेण मिलिच्छो जाओ। अओ पुव्वकम्मप्पहावस्स
चरणेन म्लेच्छो जत। अत पूर्वकर्मप्रभावस्य
इमस्सि सरीरम्मि विज्जमाणत्तेण अणेण सरीरेण
अस्मिन् शरीरे विद्यमानत्वेन अनेन शरीरेण
छत्तिओ ण होइस्सइ।
क्षत्रियो न भविष्यति।

---

विवेकपरित्यागेनेति। विवेकस्य भक्ष्याभक्ष्यादिविचारस्य परित्यागेन। कपूयेति। कपूयाना दुष्कर्मणामाचरणेन म्लेच्छो म्लेच्छजातीयो यवनो जात। अत॰ पूर्वकर्मेति। पूर्वजन्मनि कृतस्य कर्मण प्रभावस्य अस्मिन् यवनशरीरे विद्यमानत्वात् अनेन यवनशरीरेण क्षत्रियो न भविष्यसि। ननु-"अङ्गीकारेण ज्ञातीना ब्राह्मणानुग्रहेण च। पूयन्ते तत्र पापिष्ठा महापातकिनोऽपि ये" इति वचनप्रामाण्यात्प्रायश्चित्तादिना शुद्धिद्वारा तस्य क्षत्रियत्वमस्तु इति चेन्न, अङ्गीकारेणेति वचनस्यात्रांशेऽसबन्धात्। तथा हि अभक्ष्यभक्षणे अगम्यागमने च कृते सति ज्ञातिभि परित्यक्तस्य महापातकिन प्रायश्चित्तादिना शुद्धौ ब्राह्मणैरनुग्रहबुद्ध्या आमन्त्रणनिमन्त्रणस्वीकारादिना तत्सग्रहे कृते ज्ञातिभि सहभोजनादिना तत्स्वीकारे च कृते कृतमहापातकिन शुद्धिरित्यत्रैव तात्पर्यं न तु पूर्वजन्मकृतपापप्रभावेण समुत्पन्नस्य शुद्धिरपि बोध्यते। किंच ज्ञातिभि परित्यक्तस्यैव ज्ञातिभिरङ्गीकारो विधीयते, न तु ज्ञात्यपरित्यक्तस्य ज्ञातिसमुत्पन्नस्यापि। अपि च यवनज्ञातिसमुत्पन्नस्य स्वसमानज्ञातिभिरेव स्वीकरण विधीयते नतु विजातिभि। अन्यच्च—पातकित्वमपि तस्य न सिध्यति, किमुत महापातकित्वम्। तथा हि—कपूयाचरणपातकप्रभावात् यवनकुले समुत्पत्तिरिति तत्पातकफलभोगस्तु जात एव। पातकफलभोगानन्तरं पापस्यैवाभावात्, न खलु विहितापराधदण्डभोगानन्तरमपि दण्ड संभवति। अतो म्लेच्छज्ञातिसमुत्पादकपापस्य म्लेच्छजातौ उत्पत्तेस्तत्फलभोगेन तत्पापस्य नाशात्किंकृत प्रायश्चित्त स्या-

प्रता०—साधु साधु, अद्यापि निःस्पृहाः सत्यैकनिष्ठा ब्राह्मणाः सन्ति । ततः

भद्र०—जदा बहुलोहदंसणप्पगारेणावि बम्हणा ण सत्थविमुहा
यदा बहुलोभदर्शनप्रकारेणापि ब्राह्मणा न शा(श)स्त्रविमुखा
जाआ तदा अकबरो छत्तिएहिं सह संबंधिउं उज्जुत्तो
जाता, तदा अकबर क्षत्रियै: सह सबन्द्धुमुद्युक्त ।
तत्थवि ण केण वि संबंधिउं पडिएणाअं किं तु जयपुर-
तत्रापि न केनापि संबन्द्धुम् प्रतिज्ञातम्, किं तु जयपुर-
राएण माणसीहपिउणा भगवाणदासेण अप्पणो भइणी
राजेन मानसिंहपित्रा भगवानदासेन आत्मनो भगिनी
दिन्ना । तओ आरभिय माणसीहो सेणाहिवई जाओ ।
दत्ता । तत आरभ्य मानसिंह सेनाधिपतिर्जातः ।
सो चेव अण्णेहिं छत्तिएहिं तस्स जउणस्स कण्णगाओ
स चैव अन्यै. क्षत्रियै तस्मै यवनाय कन्यका.
दावेइ ।
दापयति ।

प्रता०—( सोद्वेगम् )

---

दिति न प्रायश्चित्तादिना क्षत्रियो भवितुमर्हतीति तात्पर्यार्थ ।

**बहुलोभे**ति । राज्यदानमानादिलोभदर्शनस्य प्रकारेणापि यदा ब्राह्मणा -ब्रह्म वेदस्तज्जानन्तीति ब्राह्मणा ,वेदार्थतत्त्वज्ञा ,शास्त्रविमुखा शास्त्रमर्यादापराङ्मुखा न जाता । यद्वा शस्त्रविमुखा इति । अपिशब्दो भिन्नक्रम । शस्त्रविमुखा अपि । शस्त्रेभ्यो विमुखा मरणपराङ्मुखा अपि न जाता, एतेन लोभप्रदर्शनानन्तर भयप्रदर्शनमपि तेन कृतम् । अथापि यदा ब्राह्मणा मरणान्न भीतास्तदा क्षत्रियै सह सम्बन्द्धुमिति सम्बन्धेन आत्मन सन्तानपरंपरा कालान्तरेण क्षत्रिय सपादयितुम्, क्षत्रियान् वा यवनान्संपादयितुमुद्युक्तः ।

**सोद्वेग**मिति । क्रियाविशेषणम्, उद्वेगेन सह यथा स्यात्तथा कथयतीत्यध्याहार्यम् । किं कथयतीति दर्शयति—

रे मानसिंह ! पतितोऽसि किमार्यवृत्ते-
नीचानुवृत्तिचरितेन धनं कियत्स्यात् ।
मानं विहाय यदि जीवसि तर्हि नार्यो
लोकास्त्वदीयचरितानि कथं स्मरेयुः ॥६॥

ततस्ततः—

भद्र०—तओ इओ रज्जलोहाओ विणिक्कंतो सअरसीहो
तत इतो राज्यलोभाद्विनिष्क्रान्त सगरसिंहो
मिलिच्छाहिरायं उवगओ ।
म्लेच्छाधिराजमुपगत. ।

प्रता०—श्रुतमेतत् । ततस्तत —

---

**रे मानसिंहे**ति । रे इति क्षुद्रामन्त्रणे । तथाभूतकार्यश्रवणेनोद्वेग-वशाद् रे इति पदेन सबोध्य कथयति । हे मानसिंह ! आर्यवृत्ते -आर्याणा वृत्तेर्व्यवहारात्, किम् ? किमर्थं पतितोऽसि । आर्यव्यवहार विहाय यथाकथ-चित्स्वपितामहस्य दास्या कन्याया दानेऽपि पुनरात्मीयतया तत्ससर्ग, लज्जावशादन्यै सह यवनस्य सबन्धं कारयितु दुराग्रहश्च । अनार्यवृत्तिता किमर्थमागतोऽसीति भाव. । अथ धनलिप्सयेति चेदाह—**नीचानुवृत्ती**ति । नीचाना नीचकार्याणाम्, अनुवृत्त्या-अनुवर्तनेन, यथा पूर्वं पितृष्वसुर्दानेन नीचकर्म विहित तथैव पुन पुनरन्यद्वारा विधानेन, अथवा नीचस्य म्लेच्छ राजस्याकबरस्य, अनुवर्त्तनेन अनुयायितया देशदास्यतासपादनेन, कियत्-कियत्परिमित, धनं स्यात्, देशदास्यतासपादनापेक्षया बहुतरमपि धन-मल्पमेवेति भाव । अथ मानशून्यस्य आर्यस्य जीवनमपि न सभवतीति कथयति । यदि त्व मान क्षत्रियत्वाभिमान विहाय त्यक्त्वा जीवसि तर्हि नार्य, आर्यो नास्ति। अथवा-न आर्यो नार्य, नाय नञ्, किन्तु निषेधार्थको न शब्द । अनार्योऽसीत्यर्थ । न खलु मान परित्यज्य आर्या जीवन्तीति भाव ।अथ वा मानपरित्यागेन मानसिंहेति नाम्न्यपि मानपदपरित्यागात् यदि जीवसि—यदि ते स्थितिर्भवति, तर्हि नार्य -कार्याकार्यविवेकशून्य क्रूरप्रकृतिक सिंह पशुरेवासीत्यर्थ । अथ भाविनि कालेऽपि तद् दुर्यश प्रदर्शयति—

भद्र०—तओ तेण भोदीयपयायणवट्टमाणो सअलोवि वुत्तंतो
ततस्तेन भवदीयप्रजाजनवर्तमान सकलोऽपि वृत्तान्त
कहिओ, तं सोऊण पडिण्णायं मिलिच्छराएण।
कथित, त श्रुत्वा प्रतिज्ञात म्लेच्छराजेन।
तुमं चैव मेवाडदेसाहिवइं करिस्सामि।
त्वामेव मेवाडदेशाधिपतिं करिष्यामीति।

प्रता०—(सक्रोधम्)

रे नीचाधिप! चिन्तयात्मकुशलं न स्थास्यसि त्वं चिरं
कृत्तां मन्निशितासिना स्वपृतनां श्रुत्वैव संधक्ष्यसे।
यच्छाक्ति मिलितः प्रतापविजयस्तज्जय्यतानिर्गतो
वीराणामधिपः स जीवति, कथं मेवाडमीदिष्यसे ॥ १० ॥

---

लोका जनास्त्वदीयचरितानि कथ स्मरेयु त्वदीयचरितानि गर्हिततया स्मरिष्यन्तीति भाव। 'विभाषा कथमि लिङ् च' इति भविष्यदर्थे गर्हाया लिङ्॥९॥

**प्रतिज्ञात**मिति। प्रतिज्ञापूर्वं कथितम्, किं प्रतिज्ञातमिति तत्स्वरूपं प्रदर्शयति—**त्वामेवे**त्यादि।

अथ मेवाडदेशस्याधिपतिं करिष्यामीति श्रवणात सक्रोधं कथयति प्रताप —**रे नीचाधिपे**ति। रे इति असदामन्त्रणे। नीचाना—नीचप्रकृतिकाना, मानसिंहसगरसिंहादीनाम्, अथ वा-नीचाना नीचजातीययवनादिशूद्राणाम्, अधिप, न तु आर्यब्राह्मणादिहिन्दूनामप्यधिपस्त्वमिति भाव। तत्सबुद्धौ हे नीचाधिप! आत्मकुशल—स्वकुशल, चिन्तय—चिन्ताकुलतया विचारय। त्वं चिर—बहुकाल, न स्थास्यसि—न जीविष्यसीत्यर्थ, कथमिति चेद् दर्शयति। मम निशितेन—तीक्ष्णेन, असिना—खड्गेन, कृत्ता—छिन्ना, स्वपृतना—स्वकीयसेना, श्रुत्वैव—श्रवणमात्रत एव, सधक्ष्यसे—दग्धान्त -करण सन् मृतो भविष्यसि। तत्र हेतु प्रदर्शयति। यत्—यस्मात्कारणात् शाक्ति—शक्तिसिंहम्, अथ च प्रभावोत्साहमन्त्रजा शक्ति, मिलित —सगत, मिलित इत्यत्र गत्यर्थत्वात्कर्तरि प्रत्यय। प्रतापविजयस्तत् तस्मात्कारणाज्जय्यतानिर्गत, जेतु शक्य —जय्य, तस्य भावो जय्यता ततो निर्गत, जेतु शक्य-

ततस्ततः—

भद्र०—तओ सो सयरसीहो तव्वयणं बहु मरणंतो अप्पाणं
तत स सगरसिंहस्तद्वचन बहु मन्यमान. आत्मान
तअट्ठे समप्पियवंतो । तअणु मिलिच्छाहिराएण
तदर्थे समर्पितवान् । तदनु म्लेच्छाधिराजेन
चित्तोरप्पदेसस्स दुग्गो तस्स दिन्नो ।
चित्तोरप्रदेशस्य दुर्गस्तस्मै दत्त ।

प्रता०—रे क्षत्रियापसद ! कुक्करवृत्तिमाप्तो
नीचाश्रितोऽसि परिहाय निजप्रभावम् ।
नाहं तव स्मृतिपथं समुपागतः स्या-
मात्मीयतातचरितं तु कथं स्मृतं न ॥ ११ ॥

---

ताया बहिर्भूत , वीराणामधिप –वीराधिपति , स प्रसिद्ध , प्रतापविजय जीवति, त्व मेवाड कथम् ईक्षिष्यसे, प्रतापे जीवति सति ते मेवाडदर्शनमपि न संभवति कुतस्तज्जय इति भाव ॥ १० ॥

**तत** इति । तदनन्तरं, स सगरसिंह , तद्वचन–तस्य अकबरस्य वचन, बहु मन्यमान –यथा अनेन प्रतिपादित तथैवाय करिष्यति, मा मेवाडाधिपतिं विधास्यतीति तदाशय । आत्मान स्वं तदर्थे म्लेच्छाधिपतये समर्पित वान्, तद्दास्यता स्वीकृतवान् । तदनु इत्यादि सुगमम् ।

तत प्रताप कथयति–**रे क्षत्रियेति**। क्षत्रियेष्वपसद -नितरा हीनस्तत्सबुद्धौ, रे क्षत्रियाधम! कुक्कुरवृत्तिं श्ववृत्तिमाप्त सन्, निजप्रभाव–स्वप्रतिष्ठा,परिहाय-त्यक्त्वा, नीचाश्रितोऽसि शूद्रजातीय म्लेच्छराजमाश्रित्य स्थितोऽसीत्यर्थ । अह तव, स्मृतिपथ–स्मरणविषयता, न समुपागत स्याम्, आत्मीयतातचरितं–परमशौर्यशालितया सुप्रसिद्धम् आत्मीयतातस्य श्रीपूज्यसागाख्यतात चरणस्य चरितम्, यो हि एकाशीतिव्रणैर्जर्जरितोऽपि स्वाधीनता न त्यक्तवा-नित्यादि तु कथ न स्मृतम्, त्वया दृष्टमेव तच्चरितं स्मृतिपथं कथ न नीतमित्यथ ॥ ११ ॥

ततस्ततः—

भट्ट०—तओ कोवि भट्टो तत्थ समुवट्ठिओ, सो क्खु मिलि-
ततः कोऽपि भट्टस्तत्र समुपस्थितः, स खलु म्ले-
च्छाहिवइं दट्ठूण विचित्तं चेव कज्जं अकारिसी।
च्छाधिपतिं दृष्ट्वा विचित्रमेव कार्यमकार्षीत्।
धरिऊण कुच्छिमज्झे उत्तारिय मत्थगउतुअ दिन्नं।
धृत्वा कुक्षिमध्ये उत्तार्य मस्तकात्त्वया दत्तम्।
सिरवेट्ठणअ भट्टो वंदसी अकबरं तत्थ॥ १२॥
शिरोवेष्टनक भट्ट अवन्दिष्ठाकबरं तत्र॥ १२॥

एअं दट्ठूण सव्वे वि अच्चरिअसमाउला जाआ तओ
एतद् दृष्ट्वा सर्वेपि आश्चर्यसमाकुला जाताः। ततो
रण्णा पुच्छियं, कम्हा उसणीसं उत्तारिय वंदइ। तओ
राज्ञा पृष्टम्, कस्मादुष्णीषमुत्तार्य वन्दते। ततो
भट्टेण कहिअं, एअं खु उसणीसं महाराअपदावस्स,
भट्टेन कथितम्, एतत्खलु उष्णीष महाराजप्रतापस्य,
सो क्खु कस्स वि ण वंदइ। एअं उसणीसं मज्झ-
स खलु कस्यापि न वन्दते। एतदुष्णीषं मम
सिरसि तस्स चेव। तेण परितुट्ठेण मह दिन्नं। तुराओ
शिरसि तस्यैव। तेन परितुष्टेन मह्यं दत्तम्। त्वरातो
गेहम्मि णउत्तारियं। तओ तस्स उसणीसं ण वंदउ त्ति
गृहे नोत्तारितम्। ततस्तस्योष्णीष न वन्दतामिति

---

**विचित्रमेव**—आश्चर्यकरमेवेत्यर्थः। तदेव आश्चर्यकरत्व प्रदर्शयति—

**धरिऊणे**ति। तत्र सर्वसामन्तसपूरितायाम् अकबरसभाया भट्ट त्वया दत्तं, शिरोवेष्टनकम्—उष्णीष, मस्तकादुत्तार्य कुक्षिमध्ये धृत्वा अकबरम्, अवन्दिष्ट-नमश्चकारेत्यर्थ॥ १२॥

**एतदि**त्यादि सुगमम्। ततस्तस्योष्णीषं न वन्दतामिति सोष्णीषेण मया वन्दने कृते सति परम्परासम्बन्धेन प्रतापकृतवन्दनमपि भवति। तथाहि

काऊण सिरसो उत्तारियं । तओ किंचि कालं सो तत्थ
कृत्वा शिरस उत्तारितम् । तत किंचित्काल स तत्र
ठिओ पुणो विणिक्कंतो ।
स्थित पुनर्विनिष्क्रान्त ।

**प्रता०**—ततस्ततः—

**भद्र०**—तअणंतरं किंचिसेणासहिओ सगरसीहो चित्तोरदुग्गं
तदनन्तर किञ्चित्सेनासहित सगरसिंह-(श्चित्रपुर)श्चित्तोरदुर्गं
समुवागओ, अम्ह इत्थ आगओम्हि । अओ परं भवंतो
समुपागत , अहमत्रागतोऽस्मि । अत परं भवन्त
पमाणं ।
प्रमाणम् ।

**प्रता०**—साधु साधु । ( ततस्स भद्रमुखो निष्क्रान्न । )

( प्रताप सचिन्त कथयति । )

रे रे कातर ! दुर्विदग्ध ! कुमते ! भेदैकवाचस्पते !
मद्दुर्धर्षसुवीरविक्रमभिया किं लीयसे स्वक्षितौ ।

---

उष्णीषे नम्रीभूते सति पूर्वकाले प्रतापशिरसा सह तत्सबन्धात्प्रतापस्यापि यथा कथचिन्नम्रीभाव सपद्यते, यथा लोके पदयोरुष्णीष कुर्वन्तो नम्रीभूता उच्यन्ते, इति तदाशय । अन्यत्सर्वं सुगमम् ।

अथ एकाकी स्थित प्रताप , सचिन्त –चित्तोरपरावर्तनेन अगतिकोपयत्वाच्चिन्तासमाकुल सन् , कथयति—

**रे रे कातरेति** । रे रे कातर ! रे भीरो !, रे दुर्विदग्ध ! रे कुमते ! दुष्टमते !, रे भेदैकवाचस्पते ! भेदे परस्परभ्रात्रादीना विभिन्नतावैरादि-सपादने एकोऽद्वितीयो वाचस्पति , तत्सबुद्धौ, भेदोत्पादने परमबुद्धिशालिन् ! मम, दुर्धर्षा –परमशौर्यशालितया दुर्जया , ये सुवीरा –परमोत्तमवीरा , तेषा विक्रमभिया–पराक्रमभयात्, स्वक्षितौ-स्वकीयभूमौ, किं लीयसे । स्वनिवास विहाय बहिरागत्य युद्धाय किं न सज्जीभवासि । यत्–यस्मात्कारणात्, त्वं

तन्मे वैरविधौ ममैव कुलजं योद्‌धुं नियुङ्क्ते परं
चित्तोरं नच रक्षितुं प्रभवसि त्वं यत्प्रतापोन्मुखः ॥१३॥
( पुनर्विचिन्त्य )
अस्तु। सगरसिंहस्यास्मत्पितृव्यस्यैवाधिकारे चित्तोर-दुर्ग इत्यात्मवंशे एव, ततो नाहं यावत्सगरसिंहं तत्परावर्तयितुं यतिष्ये।
तत्परावर्तने वंशे वैरभावः समुज्वलेत्।
दोषः पितृव्यघाते स्यात् तस्मात्तत्रैव तिष्ठतु ॥ १४ ॥
( अथोपैतिष्ठते दौवारिक । )

दौवा०—जेदु जेदु महाराओ।
जयतु जयतु महाराज ।

प्रता०—किमस्ति।

दौवा०—रज्जपीढाहिरोहणाणंतरं पढममहुच्छवे आहेडत्थं
राज्यपीठाधिरोहणानन्तर प्रथममहोत्सवे आखेटार्थ-
इट्ठमित्तबन्धवजणेहिं सह मेवाडदेसाहिवई गच्छइत्ति
मिष्टमित्रबान्धवजनै सह मेवाडदेशाधिपतिर्गच्छतीति

---

प्रतापोन्मुख –प्रतापसंमुखस्थित, चित्तोर–चित्तोर ( चित्रपुर[1] ) नामक दुर्ग रक्षितुं न प्रभवसि, तद्रक्षणे न समर्थो भवसि तत् तस्मात्कारणान्मे मम वैरविधौ ममैव परं पितृव्यत्वात्पूज्यं कुलजं पितामहपुत्रं सगरसिंह योद्‌धुं नियुङ्क्ते-नियोजयसि । यवनहस्ताच्चित्तोरदुर्गोद्धार आवश्यक, तदुद्धारे पितृव्य एव परिपन्थीत्यसमञ्जसमेव ॥ १३ ॥

**पुन**रिति। यवनहस्ताच्चित्तोरदुर्गोद्धार इत्येवास्मत्कर्तव्यं तत्तु निष्पन्न-मेवेति पुनर्विचिन्त्य कथयतीत्यध्याहार्यम्। अथ विचारस्वरूपं प्रदर्शयति—**सगरसिंहस्ये**त्यादि सुगमम्।

**तत्परावर्तने** इति । तस्य–चित्तोरदुर्गस्य, परावर्त्तने–सगरहस्तादुद्‌धृत्य स्वायत्तीकरणे, वंशे–स्वकीये एव वशे

---

१ 'चित्रपुर' संस्कृतस्यायं चित्तोर इति प्राकृतम्, संज्ञाशब्दवशा-त्स्पष्टप्रतिपत्तये च मया तथैवोक्तमिति।

( इति निष्क्रम्य अश्वपरिचारकमाज्ञाप्य यथास्थानं स्थित । )

( अश्वपरिचारको मन्दुरातश्चेतकाश्व निष्कामयति । )

सालुम्बः—अत्युत्तमोऽयं चेतकाश्वः, पश्यत्वेनं महाराजः ।

हरेर्हयेभ्यो हरितां परिक्रमं विनिर्गतोऽयं किमु चेतको हयः ।
हरित्सवर्णो हरिवंशनायकं भवन्तमाराद्धुमुपागतो भुवम् १५॥

शक्ति०—महाराज ! चंचूर्यमाणमस्य मुखमवलोकयतु ।

कथं क्षमायाः क्षणमात्रतः क्रमे
भवेन्नु मे सिद्धिरितीव चेतकः ।
चलाचलप्रोथपदेन मारुता-
त्मजस्य मन्त्रं जपतीव सन्ततम् ॥ १६ ॥

---

अश्वेति । अश्वस्य–चेतकाश्वस्य, परिचारक –परिचर्याकारक , मन्दु-रात –वाजिशालातः, 'वाजिशाला तु मन्दुरा' इत्यमर ,स्थितिस्थानादित्यर्थ ।
एनमिति । एनं चेतकाश्व, महाराज पश्यतु ।

हरेरिति । हरिता–दिशा, परिक्रमे–परिक्रमणसमये, हरे –सूर्यस्य हयेभ्य अश्वेभ्य , विनिर्गतः–सूर्यरथाद् बहिर्भूत , हरित्सवर्णः-हरिता दिशा समानवर्ण , दिक्सदृशनीलवर्णोपलक्षित , अयं–चेतकाख्यो हय ,हरिवंशस्य नायक–हरिवंशनायक सूर्यवंशश्रेष्ठं, भवन्तम् आराद्धुं–सेवितुम्, भुव–पृथिवीम्, उपागत किमु। किमु इति वितर्के । सूर्याश्वाना हरिद्वर्णोपेतत्वात्तस्यैवायमश्व इति मे प्रतिभाति ॥ १५ ॥

अश्वो भृश नासिकोष्ठ चालयतीत्यश्वस्वभाव एव । तदवलोक्य उत्प्रेक्षमाण शक्तिसिंह प्रताप संबोध्य कथयति—
कथं क्षमाया इति । क्षणमात्रत –क्षणमात्रेण, क्षमाया -पृथिव्या , सग्रामे, सहिष्णुताया वा,क्रमे–क्रमणे, मे मम,सिद्धि कथन्नु भवेत्,इतीवेति-इति हेतोरिव, चेतक , चलाचलप्रोथपदेन–नितान्तचञ्चलनासिकास्थानेन, मारुतात्मजस्य–हनुमत , मन्त्रं, सन्ततम्–अविरतं, जपति इव । 'चलन कम्पनं कम्प्र चल लोल चलाचलम्'इत्यमर । 'घोणा तु प्रोथमस्त्रियाम्'इति चामर । चञ्चलं नासिकास्थानमवलोक्योत्प्रेक्षते, मारुततुल्यवेगवतो मारुता-त्मजस्य प्रजवित्वसिद्धये आराधनामयं करोतीति भाव ॥ १६ ॥

रावतकृष्णः—महाराज ! पश्य तावदस्य चेष्टाम्—

पदे समुत्थाप्य तव द्विषो गलं
ग्रहीतुमिच्छन्निव खं चरत्यसौ ।
अथापि तत्र त्वनवाप्य तं पुना
रसातलं शोधयितुं समीहते ॥ १७ ॥

पुरो०—साधु रावतकृष्ण ! साधु । पश्यन्तु महाराजाः अस्य चरणव्यापारम्—

मत्स्वामिप्रतिपक्षमङ्ककुहरे कञ्चिन्निलीय स्थिता
गोत्रा गोरिपवे ददाति निभृतं धान्यं धनं भूरिशः ।
इत्यस्या जडतां निरीक्ष्य बहुशः क्रोधादिमां क्षोभयन्
पादात्कुट्टति शिक्षयन्निति जडे मैवं विदध्याः पुनः ॥१८॥

---

अथ रावतकृष्णश्चेतकाश्वस्य चेष्टामालोक्य तदवलोकनाय प्रतापमुन्मुखीकरोति—**पदे** इति । असौ चेतक, पदे–हस्तस्थानीयौ चरणौ 'पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । समुत्थाप्य तव, द्विष–शत्रो, गल–कण्ठदेश, ग्रहीतुम्, उपादातुम्, इच्छन्निव, खम्–आकाशं, चरति । अथ तव शत्रोर्गलग्रहेच्छयैव आकाशे पदे उत्थापयतीति भाव । अथ तव शत्रूणा युद्धत्यागेन पलायनानन्तर मृतानामन्तरिक्षेऽप्राप्तेस्तस्य चेष्टान्तरमाह । अथापि आकाशे गमनानन्तरमपि, तत्र तु–आकाशे तु, तं त्वदीय, रिपुम्, अनवाप्य–अप्राप्य, पुन, रसातल–पृथ्वीतलं,शोधयितु, समीहते–चेष्टा करोति । पापाचरणेन अधोगामिनं तं शत्रुमन्वेषयतीत्यर्थ. ॥१७॥

अथ पुरोहितो रावतकृष्णोक्तिमनुमोदयन्पादकुट्टनं वर्णयति—**मत्स्वामी**ति । गास्त्रायते इति गोत्रा–पृथिवी, कञ्चन–अनिर्वचनीय धर्मविरुद्धाचारित्वादग्राह्यनामान, मत्स्वामिप्रतिपक्ष–मम स्वामिन प्रतिपक्षभूत, यवनम , अङ्ककुहरे–क्रोडरूपे विवरे, निलीय–निह्नुत्य, स्थिता सती, 'यवना मृता भूमौ निखन्यन्ते' इति यवनानामाचारस्तदेवाश्रित्योत्प्रेक्षते–निलीय स्थिता गोत्रा गोरिपवे–गवा शत्रवे, यवनाय, निभृतं–विनीतं, यथास्यात्तथा 'वश्य प्रणेयो निभृतविनीतप्रश्रया समा' इत्यमर । भूरिश

( तत प्रतापश्चेतकम्, अन्ये च स्व स्वमश्वमारुह्य वनमभिगच्छन्ति । )

( यवनिकानिपात । )

( आखेटमाचर्य एकत्रोपविशन्ति । )

( तत प्रविशति आरण्यकप्रबन्धकर्ता सेनापति । )

**सेनापतिः—जयतु जयतु महाराज.।**

**प्रता०—कथय आरण्यकानां वृत्तान्तम् ।**

**सेना०—**

**त्वदीयमाखेटकयानवृत्तं श्रुत्वैव भीताः सहजं विरोधम् ।**
**हित्वा समुद्विग्नहृदश्च सर्वे पलायिता वन्यमृगाश्चरन्ति ॥ १६ ॥**

**किं बहुना—**

**एकः खे द्विजराजमध्यमहित. सुस्थो मृगो मोदते ।**
**बर्ही शक्तिधरस्य राजति सुखी हंसो गिरः शोभते ।**

---

धान्य व्रीह्यादिक धन स्वर्णरजतादिक ददाति । इत्येतत्स्वरूपा ‘यद् इय गोत्रा गोरिपवे धन धान्य ददाती’तिस्वरूपाम्, अस्या –पृथिव्या, जडता-मूर्खता, निरीक्ष्य, क्रोधादिमा गोत्रा, क्षोभयन्-सचालयन्, हे जडे–मूर्खे, पुनरेव मा विदध्या इति शिक्षयन्–बोधयन्सन्, पादात्कुट्टति–ताडयति । नाय माङ् किं तु निषेधार्थको माशब्दस्ततो लुङ् न । यवनानुकूलाचरणादिमा पृथिवीमय कुट्टतीति भाव ॥ १८ ॥

**तत** इत्यादि सर्वं सुगमम् ।

अथ सेनापतिराखेटवृत्तान्त वर्णयति—**त्वदीयेति** । त्वदीयं–त्वत्सम्बन्धि, आखेटकयानवृत्तम्–मृगयागमनवर्त्तन, श्रुत्वैव–आकर्ण्यैव, नत्ववलोक्येति भाव, भीता –त्रस्ता, समुद्विग्न हृदय येषा ते तथा–भयोद्विग्नमानसाश्च, सर्वे वन्यमृगा –सिंहवराहशशमृगादय, सहजं विरोध–स्वाभाविकं गोव्याघ्रादिसबन्धिन वैरभावं, हित्वा त्यक्त्वा, पलायिता सन्तश्चरन्ति । भयाच्च कश्चिदपि विरोधिनमवलोकयतीति सभूय सर्वे गच्छन्तीति भाव । एतेनास्य प्रतापातिशयो बोध्यते ॥ १६ ॥

अथाखेटबहिर्भूतान्मृगादीन् दर्शयति । **एकः** इति । एक केवल., ‘एको मुख्यान्यकेवला’ इत्यमर । खे-आकाशे, द्विजराजश्चन्द्रस्तस्य मध्ये

शेते शैलसुता हरिर्गजमुखः क्रीडत्युमाङ्कान्तरे
यान्त्यन्ये भयतो दिशोऽपि विदिशः सर्वेऽप्यरण्योद्भवाः२०॥

तत्र मृगाः—

भवन्मौर्वीशब्दं भयविहितदीनार्तनिनदाः
निशम्यालोक्य स्वान्सुतगृहकलत्रप्रियजनान् ।
मृगास्त्रासाद्गन्तुं सजलनयनाश्चातिविरहात्
समायातुं प्रेम्णा स्थितिमभिलषन्तो दद्दशिरे ॥ २१ ॥

---

महित पूजितो, मृग , सुस्थ भयादिरहित सन्, मोदते आनन्दति, तत्र तव गमनाभावान्न तस्य भयमस्तीत्यर्थ । तथा एक , शक्तिधरस्य स्वामिकार्तिकस्य बर्ही–मयूर , सुखी राजति, स्वामिकार्तिकस्य सबन्धान्न तस्य भयमस्तीति भाव । तथा एक , गिर –सरस्वत्या , हस शोभते । देहलीदीपकन्यायात् सुखी इति उभयत्र सबध्यते । तथा एक· शैलसुताया , हरि –सिंह , शेते, सुखावस्थाया शयनमिति सिंहस्वभाव । तथा एको गजमुख –गजानन , गजमुखत्वाद्भयकारण सूच्यते। उमाङ्कान्तर-पार्वत्या क्रोडमध्ये, क्रीडति, सोऽपि तत्रैव स्थितो न पुनर्बहि क्रीडति । एतेषा दैविकशक्तिसम्बन्धात् भवतां तत्र तत्र गमनाभावाच्च न भयमस्तीति भाव । अन्ये सर्वेऽपि अरण्योद्भवा पशुपक्षिसरीसृपादयो भयत -भीत्या दिशोऽपि–सुरक्षित-मार्गादपि, विदिशो-विरुद्धमार्गान्, यान्ति । एष एवाखेटप्रकार । यदेका दिक् पन्था वा तेषा पलायनार्थं मुच्यते, ततश्च प्रारब्धरहिता विदिशोऽनुधावन्तीति न तेषा हनने दोष इति तात्पर्यार्थं ॥ २० ॥

अथ चन्द्रस्थित मृगं विहाय अन्येषा मृगाणामवस्था वर्णयति— **भवन्मौर्वी**ति । भवतस्तव मौर्वीशब्दं–प्रत्यञ्चाध्वनिं, निशम्य–श्रुत्वा, भयविहितदीनार्तनिनदा –भयेन विहित कृतो दीनो मरणकालिक इव ह्रस्व आर्तनिनद करुणाशब्दो यैस्ते, तथोक्ता , मृगा त्रासाद् गन्तुं–पलायितुम्, स्वान्–स्वकीयान् , सुतगृहकलत्रप्रियजनान्–पुत्रगृहस्त्रीमित्र-वर्गान् , अवलोक्य–दृष्ट्वा, अतिविरहात्–अन्यतरमरणेनात्यन्तिकवियोगात्स-जलनयना –साश्रुलोचना ,प्रेम्णा,समायातुम्–परावर्तितु,स्थितिम्–अवस्थानम्

तत्र बर्हिणः—

बर्ही स्वकेषां परिरक्षणाय प्रसादयन्नृत्यति कानने त्वाम् ।
जात्याऽप्यवध्यत्वमसौ ततोऽगात्केकासमुद्घोषितसाधुवादः२२

तत्र हंसाः—

चुं-चुं-कृतं तनयमात्मभिया विहाय
गच्छन् विहायसि परिक्रिमिमातनोति ।
भूयश्च सन्निहितशाखिनि वर्तमानो
हंसः स्तवीति तव कारुणिकप्रवृत्तिम् ॥ २३ ॥

---

अभिलषन्त.—इच्छन्त सन्तो ददृशिरे । भयप्रेम्णोर्यौगपद्येनोपगमाद-न्तरालस्थिता एव मृगा अस्माभिर्ददृशिरे । मौर्वीशब्दश्रवणानन्तरमेव त्रासा-दिवर्णनात्तस्य लक्ष्यातिशयत्व बोध्यते ॥ २१ ॥

अथ स्कन्दस्य बर्हिणोऽतिरिक्ताना बर्हिणा दशा वर्णयति—बर्हीति । बर्ही—मयूर, इह तथा वक्ष्यमाणेषु हंसादिषु सर्वत्र जातित्वादेकवचनम् , स्वकेषाम्—आत्मीयाना, परिरक्षणाय, कानने—अत्रैव वने, त्वा प्रसादयन्नृत्यति । स्वकीयनर्तनेन त्वा प्रसादयतीत्यर्थ. । तत - तस्मात्कारणात्, केकया—स्ववचसा, समुद्घोषित —सम्यक् प्रकारेण स्फुटतया उद्घुष्ट साधुवादो येन, तथाभूत असौ मयूर जात्याऽप्यवध्यत्व-मगात् । प्रसादान्मयूरजातिरवध्या जाता, स्वकीयाना परिरक्षणमभिलषत-स्तस्य जातेरपि त्वया परिरक्षण कृतमिति अभिलषितादत्यधिकदानात्प्रतापस्यौ-दार्यातिशयो बोध्यते । मयूरो नैव हन्तव्य इति धर्मशास्त्रमर्यादा ॥ २२ ॥

अथेतरेषा हंसानामवस्था दर्शयति—चुंचुंकृतमिति । हस चुचु कृत—चुचुमितिशब्दं कुर्वन्तं, तनयम्, आत्मभिया—स्वप्राणभयेन, विहाय परित्यज्य, विहायसि-आकाशे, गच्छन् सन् , परिक्रमिमातनोति-हस आकाशे परिक्रमा-कारेण उड्डीयते इत्येष खलु हसस्वभाव । भूयश्च—तदनन्तर च, सन्निहित-शाखिनि वर्तमान -सनिकटे वृक्षे विद्यमान सन् ,तव कारुणिकप्रवृत्तिं—करुणामयं तव व्यवहार, स्तवीति—प्रशसति । यदयमबोधं मत्तनयमालोक्य मा न मारयति, नापि मत्तनयं गृह्णातीति ते कारुणिकीं प्रवृत्तिं स्तौतीति भाव ॥२३॥

तत्र सिंहानां विचित्रैव दशा—

सिंहो मत्तगजेन्द्रकुम्भदलने नासेवते विक्रमं
क्रोडायातमपि क्षुधाप्तहृदयो नालोकते धैनुकम् ।
नादत्ते सलिलं च शुष्करसनो घर्माकुलो विह्वलः,
किन्तु त्राणमनाप्य घोरविपिने भीत्या परिभ्राम्यति२४॥

तत्र गजः—

नागो नैव सरोरुहेषु विचरत्याभ्रान्तचित्तो भिया
मन्दं मन्दमुपैति जीरकवनात्सम्यक् क्षुधासंकुलः ।

---

अथ सिंहाना दशा दर्शयति—**सिंह** इति। सिंह मत्ताना-मदोन्मत्ताना,गजेन्द्राणा-गजराजाना,कुम्भस्य दलने—कुम्भस्थलविदारणे,विक्रम नासेवते-पराक्रम नाचरतीत्यर्थ। तथा क्षुधया—बुभुक्षया, आप्त—व्याप्त, हृदयं यस्येति तथा अतिबुभुक्षित इत्यर्थ, क्रोडायातमपि—अङ्कागतमपि, धैनुक—धेनूना समूहं, द्वित्रादिधेनूना पलायने तन्निरीक्षणवैफल्य स्यादिह धेनूना समूहोऽस्ति तमपि नालोकते तन्निरीक्षणमपि नैव कुरुते, तन्मारणादिकथा तु दूरापास्ता। तथा शुष्करसन—पिपासाकुलतया शुष्कजिह्व, घर्मेण—आतपेन, आकुल—व्यस्त, विह्वल—जलस्यापानादुद्विग्न, एतेन जलपानस्य अत्यावश्यकता सूच्यते। एवभूतोऽपि सन्,सलिल च नादत्ते—प्राप्तमपि जल पातु नैव गृह्णाति। एष खलु सिंहस्वभाव—यदयं भयोद्विग्न सञ्जल न पिबति। किन्तु, त्राण—रक्षकम्, अनाप्य—अप्राप्य, घोरविपिने—महारण्ये, भीत्या परिभ्राम्यति—अनवस्थितया इतस्ततो घूर्णतीत्यर्थ। भ्राम्यतीत्यत्र 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलष' इति श्यन्। 'शमामष्टानाम्' इति दीर्घ। सिंहानामप्युद्वेगजनकत्वादस्य शौर्यातिशयित्व द्योत्यते॥ २४॥

अथ हस्तिना दशा दर्शयति—**नाग** इति। नाग—हस्ती, भिया—भयेन, आभ्रान्तं चित्त यस्येति तथा विभ्रान्तमना सन्, सरोरुहेषु—कमलेषु, नैव विचरति, कमलोद्घाटन तद्भक्षण तत्र क्रीडाकरण चेति हस्तिना स्वभाव, परतु भिया तत्र गच्छत्यपि न। तदुद्घाटनादिकथा तु दूरापास्ता। तथा सम्यक् क्षुधया सकुल व्याप्त, अतिबुभुक्षितोऽपि जीरकवनात् मन्दं मन्दम्—अति-

आलोक्यापि निजां प्रियां स्वनयने सोच्छ्वासमामीलयन्
निह्नोतुं स्थलमद्रिगं मृगयते नीचं त्वनीचस्थितिः ॥२५॥
( ततः प्रविशति आरण्यकवृत्तान्तपरिज्ञानाय प्रेषितश्चरः । )

चरः—जयतु जयतु महाराजः ।

प्रता०—कथय तावदारण्यकानां वृत्तान्तम् ।

चरः—किं नाम तेषु वक्तव्यम्—

फेरुर्घोरे सघनगहने पादयुग्मे निषण्णः
किंचिच्चोर्ध्वं समुदिततनुर्द्रष्टुमीहां विधत्ते ।
फेत्कुर्वन्स्वान् खलु मृगयते स्थानतः स्थानमन्यत्
गच्छन् स्वेषु व्रजति सहसा वाशितस्य क्रमेण ॥ २६ ॥

---

मन्दम्, उपैति-गच्छति, ततो निस्सरतीत्यर्थः । जीरकभक्षणे हस्तिना प्रेमातिशयो भवतीति तत्स्वभावः, परं तु भिया विलम्बमसहमानो जीरकवनाद् बहिरेव गच्छति, क्षुधायुक्त इति कृत्वा तद्भक्षितुमिच्छन्मन्दमन्दमुपैति । क्षुधायुक्तत्वेऽपि स्वाभिमतभोजनोपलब्धावपि भयस्याधिक्यान्न भक्षयति,किंतु त्वरावशात् ततो बहिरेव गच्छति । तथा निजामात्मीयां सर्वथा स्वानुकूलां, प्रियां—कान्ताम्,आलोक्यापि स्वनयने—स्वनेत्रे सोच्छ्वासमामीलयन् तद्दर्शनाभिलाषया किञ्चिदेव निमीलयन्नित्यर्थः । तत्त्यागेऽतिदुःखं मन्यमानोऽपि स्वप्राणभिया तां रक्षितुमशक्नुवन्सोच्छ्वासं नेत्रे निमील्य तां त्यजति । दर्शने प्रेमातिशयात्स्थितौ स्वस्य मरणमापद्येतेति तदाशयः । अनीचस्थितिः—समुन्नतकायः, सः, अद्रिग-पर्वतगतं, नीचं स्थलं,निह्नोतु-स्वरक्षार्थं तत्र स्थातुमित्यर्थः । मृगयते-अन्वेषणं करोतीत्यर्थः । हस्तिनोऽपि त्वत्तो बिभ्यतीति महापराक्रमशालित्वमस्य व्यज्यते ॥ २५ ॥

अथ चरः आरण्यकानां वृत्तान्तं वर्णयति—**फेरुरिति** । फेरुः—शृगालः, घोरे—भयङ्करे, सघनगहने—सान्द्रवनमध्ये, पादयुग्मे निषण्णः—पादद्वयमात्रे स्थितः, किञ्चित्स्वल्पमेव, ऊर्ध्वमुपरिभागे, समुदिता-उन्नता, तनुः—शरीरं, यस्य सः, तथोक्तः सन्, द्रष्टुमीहां—चेष्टां, विधत्ते—करोतीत्यर्थः । अहमवलोकयेयं मां न कश्चिदवलोकयत्विति किञ्चिदेवोत्तिष्ठति,

किं बहुना—

व्यालो याति समूषकश्चटकिका श्येनान्विता निर्भया
काकोलूककुलं परस्परमहो गोव्याघ्रमास्कन्दयत् ।
तप्तः सूर्यकरैर्निषीदति शशो व्याघ्रोदरानातपे
सर्वे प्राणभिया प्रयान्ति विदिशो नो शत्रुमाच्छिन्दते॥२७

---

एष खलु शृगालदर्शनप्रकार । तथा फेत्कुर्वन्–फे कारशब्दं कुर्वन् , स्थानत – एकस्मात्स्थानात्, अन्यत्स्थानं गच्छन्सन् , स्वान्–स्वकीयान्, शृगालान्, मृगयते–अन्विष्यति । वाशितस्य क्रमेण तिरश्चा शब्दानुसृत्या 'तिरश्चा वाशित रुतम्'इत्यमर । स्वेषु–स्वकीयेषु, शृगालसमूहे सहसा व्रजति-गच्छती त्यर्थ । एष खलु शृगालस्वभाव , यत्परस्पर शब्द कुर्वन्त शब्दानुसरणेन एकत्रामिलन्तीति भावः ॥ २६ ॥

अथ सर्वेषामारण्याना संभूय दशा दर्शयति—व्याल इति । व्याल.–सर्प , समूषक –मूषकेण सहित , याति । चटकिका–गृहादिष्ववस्थायिनी पक्षिणी, श्येनेन अन्विता सती निर्भया याति । स्त्रीणा स्वभावत एव भय भवतीति चटकिकेत्युक्तम् । पर भवदाखेटभया-पेक्षया स्वाभाविकमपि श्येनभयमल्पमेवेति श्येनान्विता याति। अथवा श्येन-स्ततोऽप्यधिकतरभीत प्रतिभातीति तेनान्विता याति, स्वयमयं भीतो न मा मारयिष्यतीति श्येनान्विता गच्छतीति भाव । एव सर्वत्र तर्कणीयम् । चटकिकेत्यत्र 'उदीचामात स्थाने०' इति वैकल्पिक इकार । अहो इत्याश्चर्ये, काकोलूकस्य कुलं गोव्याघ्रं च,परस्परम्-अन्योन्यमास्कन्दयत्–समूद्गत् ,याति। गोव्याघ्रमत्र 'येषा च विरोध शाश्वतिक.' इत्येकवद्भाव । तथा सूर्यकरै-स्तप्त –घर्माकुल , शश , व्याघ्रोदरस्य, अनातपे–छायाया, निषीदति। शशस्य स्वभाव एवायम्, यदय गच्छन्सन्स्वल्पामपि छायामवलोक्य तत्रैव निषीदति। सर्वे-पक्षिसरीसृपजङ्गमादय ,प्राणभिया–स्वप्राणभयेन, विदिश –विरुद्धदिश , प्रयान्ति गच्छन्ति, शत्रुं–रिपुं, नो आच्छिन्दते–नैव मारयन्तीत्यर्थ । आरण्यकानामत्यन्तभयजनकत्वात्तव प्रभावस्य लोकातिशयित्व बोध्यते॥२७॥

एवं च भवत्प्रतापसमुद्वेजितकिरितरक्षुशार्दूलकण्ठीरवभल्लूकलुलायखड्गिजम्बुकगौधेरशल्यवृककुरङ्गचीनचमूरुशम्बरगवयशशादिभिर्भयादितस्ततो भ्रमद्भिः क्रूरहिंस्रकसत्त्वैः समन्ततो व्याप्तमिवारण्यमिदानीं संपद्यते ।

प्रतापः—तर्हि क्रूरहिंस्रकारण्यकानां संशोधनाय पुनरप्यस्माभिः प्रयतितव्यम् ।

सालुम्बकर्णशक्तिप्रभृतयः—अवश्यमेव ।

( तत प्रतापसहिता आरण्यकाना सशोधनार्थं सर्वे अरण्ये प्रविशन्ति । )

( पटाक्षेप )

( इत आगरानगरे स्थित समस्तभारतसाम्राज्यलिप्सया अकबरश्चिन्तयते । )

अकबरः—काश्मीराङ्गकालिङ्गवङ्गमरुभृत्सौराष्ट्रकर्णाटकाः
मत्स्यः केरलकेकयान्ध्रमगधाः पाञ्चालगान्धारकौ ।

---

एवं चेति । आरण्यकाना दिग्गामित्वेन तव प्रतापेन समुद्वेजितै, किरीत्यारभ्य शशादिपर्यन्तस्य कर्मधारय । तत्र किरिः—सूकर, तरक्षु—चित्रक, चीता इति लोके प्रसिद्ध, शार्दूल—व्याघ्र, कण्ठीरव—स्कन्धदेशे सटायुक्तः सिंह, भल्लूक—ऋच्छ, भालू इति लोके, लुलाय—महिष, खड्गी—गण्डक, गैंडा इति लोके, जम्बुक—शृगाल, गौधेरो—गोह इति प्रसिद्धस्य पुंजातीय सरीसृप, शल्य—सूचाकारलोमा स्याह इति लोके प्रसिद्ध, वृक—क्षुद्रगर्दभसमकाय अजाभक्षक भेडहा भेड़िया वेति लोके प्रसिद्ध, कुरङ्ग—मृग, चीन—अजासदृशो हरिणविशेष, घोड इति लोके, चमूरु—चित्रकबिन्दुयुक्तो हरिणविशेष, शम्बर कृष्णवर्णो हरिण, गवयो—गोसदृशो गलकम्बलरहित पशु, शश. प्रसिद्ध । अन्यत्सुगमम् ।

अथ प्रतापनिश्चयमाह—तर्हीत्यादि । यदि हिंस्रकसत्त्वैर्व्याप्तमरण्यमस्ति, तर्हि क्रूरा—दुष्टस्वभावा ये वृकभल्लूकादय, तथा हिंस्रका—हिंसनशीला, ये व्याघ्रादय आरण्यकास्तेषा, सशोधनाय-मारणार्थं, पुनरपि यतितव्यम्, यद्यपि पूर्वं संशोधितं पर नाद्यापि सर्वथा शुद्ध जातमिति पुनरपि सशोधने यत्न कर्तव्य । एतेनास्य स्वभावे धैर्यमवगम्यते ।

मद्रः कोशलकच्छगुर्जरभुजाः सौवीरसिन्धुव्रजा
एते मे वशगाः परं लघुतमो नाद्यापि मेवाडकः ॥ २८ ॥
अस्तु—जितः कर्णाटको येन स मानः साभिमानिकः ।
ध्रुवं संमानतः स्वल्पान्मेवाडं नाशयिष्यति ॥ २९ ॥

---

आगराख्यस्वराजधान्यां स्थितस्य अकबरस्य चिन्तां प्रदर्शयति—**काश्मीरेति** । काश्मीरः प्रसिद्धः, अङ्गः—विहारप्रदेशान्तर्गतः, कलिङ्गः—बङ्गालप्रान्तो देशः, वङ्गः—वङ्गालः, मरुभूतः—मरुधरः, सौराष्ट्रः—सोमनाथमहादेवस्थितिप्रान्तीयो देशः, काठियावाड । कर्णाटकः—प्रसिद्धः, मत्स्यः—धवलपुरप्रान्तीयो देशः, केरलः मलावार । केकयः—काश्मीरचम्बामध्यवर्ती पर्वतप्रदेशस्थितो देशः । अत्रत्यैव केकयीति वाल्मीकादावस्ति । आन्ध्रः—स्वनामप्रसिद्धः, मगधः—भोजपुरप्रान्तीयः, पाञ्चालः—कान्यकुब्जो देशः, गान्धारः—खान्धारेति नाम्ना प्रसिद्ध इत्येके, जम्बूप्रान्तीय इत्यन्ये । मद्रः-मॉझा इत्येके, चम्बा इत्यपरे । कोशलः-अयोध्याप्रान्तस्थितः, कच्छगुर्जरभुजाः—स्वस्वनाम्ना प्रसिद्धाः, सौवीरः—मारवाडमेवाडयोर्मध्यस्थितो देशः । सिन्धुः—सिन्धुनाम्ना प्रसिद्धः, एते व्रजाः—समूहाः, 'गोष्ठाध्वनिवहा व्रजाः' इत्यमरः, मे वशगाः-ममाज्ञानुगामिनः, परं लघुतमः स्वल्पः कुत्सितो मेवाडो मेवाडकः, 'कुत्सिते' इत्यनेन, 'सञ्ज्ञायां कन्' इत्यनेन वा कन्। अद्यापि न वशगः, विभक्तिविपरिणामेन योज्यम् । बृहत्तमानां देशानामात्मवशगामित्वेऽपि स्वल्पस्य मेवाडस्य स्वतन्त्रत्वाच्चिन्तातिशयो द्योत्यते ॥ २८ ॥

अथ पुनस्तदुपायलाभाच्चिन्तां निरस्यन् कथयति—**जित** इति । येन-अस्मत्सेनापतिना, कर्णाटको देशो जितः स, अभिमानेन सह चरतीति साभिमानिकः—अत्यधिकाभिमानयुक्तः । एतेन अस्मद्गूढाभिसन्धिवशात् कर्णाटकविजयानन्तरं मेवाडं गच्छन्मानोऽपमानितो भविष्यतीति साभिमानिकत्वेन स्वत एव वैरायिष्यत इति सूचितं भवति । मानः-मानसिंहः, ध्रुवं **स्वल्पात्संमानतः**, मेवाडं-मेवाडदेशाधिपतिं, नाशयिष्यति । तन्नाशात्तत्राधिपतित्वमस्माकं भविष्यतीति भावः ॥ २९ ॥

( पुनर्विचिन्त्य )

आः! दुर्जय प्रतापः। तदीयसैनिका अपि स्वस्वभुजदण्डखण्ड्यमानासंख्यतरक्षुभल्लूकपञ्चाननसूकराः परमसाहसशौर्याखर्वदर्पशोभमानाः स्वभूमिरक्षणदृढव्रताः सन्ति। जीवत्सु तेषु कथमसौ जय्यः।

( तत. प्रविशति दौवारिक । )

दौवारिकः—जेदु जेदु महाराओ।
जयतु जयतु महाराज॰।

अक॰—( सोच्छ्वासम्। ) किं वक्तव्यम्।

दौवा॰—विक्कमसीहणामा इंदजालिओ दुआरि चिट्ठइ।
विक्रमसिंहनामा ऐन्द्रजालिको द्वारि तिष्ठति।

अक॰—( मनसि विचिन्त्य ) आम्, ज्ञातम्। मुहम्मदनामा विश्वस्तो विद्वान् स्वभृत्योऽसौ प्रतापवृत्तपरिज्ञानाय ऐन्द्रजालिकवेषेण प्रेषितः।
(प्रकाशम्)प्रवेशय, तावदिन्द्रजालदर्शनेनैव मनो विनोदयिष्याम॰।

दौवा॰—जं देवो आणवेदि।
यद् देव आज्ञापयति।

( निष्क्रम्य पुनस्तेन सह प्रविशति। )

अक॰—दौवारिक! त्वमपि स्वनियोगमशून्यं कुरु।

( इति दौवारिको निष्क्रान्त । )

अक॰—मुहम्मद! अथवा अलं नामोद्घाटनेन, ऐन्द्रजालिक! कथय प्रतापवृत्तान्तम्।

ऐन्द्र॰—इत उदयपुरं मयि प्राप्ते सति प्रतापः कर्णसालुम्बशाक्ति-

---

दुर्जय इति। 'ईषद् सुषु॰' इति खल्। स्वस्वभुजदण्डेन खण्ड्यमानत्वात् परसाहसिकत्व सूच्यते। स्वभमिरक्षणदृढव्रतत्वेन उपायान्तराभाव सूचितो भवति। जय्य इति। 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेश।

पुरोहितादिभिः सहाखेटार्थं निष्क्रान्तः । अहमपि तत्प्रजामात्मानं ख्यापयन् वागुरिकवेषेण तेन सहैव निष्क्रान्तः ।

अक०—साधु साधु, युक्तो वेषोऽङ्गीकृतः । ततस्ततः—

ऐन्द्र—ततः प्रतापसालुम्बशक्तिसिंहादिभिरन्यैश्च सामन्तसुभटैः क्वचिद्विशिखैः क्वचिदसिभिश्च आखेटो विहितः । बहुशश्च सिंहशार्दूलवराहभल्लूकादयस्तैर्निपातिताः ।

अक०—श्रुतमेतत्पर्यन्तम् ।

ऐन्द्र०—तदनन्तरं बहून् सिंहादीन् विनिपात्य प्रतापशक्ति पुरोहितादयो विश्रान्तुमेकत्र स्थिताः, अहमपि दूरत एकत्र स्थाने स्थितोऽभवम् ।

अक—ततस्ततः—

ऐन्द्र०—

अत्रान्तरे घुर्घुरघोररावी
कोलः समुद्वेजितसैन्यचक्रः ।
जङ्घान्तरेऽश्वान् शतशो विदीर्य
प्रतापशक्त्योरथ गोचरोऽभूत् ॥ ३० ॥

---

युक्तो वेष इति । सोपहासकथनमिदम् । वागुरिकाणामधमजातित्वात्तत्कार्यकरणमपि गूढभेदज्ञानाय स्वीकृतम् । यद्वा परमार्थकथनपरकमिदम् । एतद्वेषेणैव सहचारितया सकलरहस्योपगमात् । अन्यत्सुगमम् ।

अथ तत्रागत वराह वर्णयति—अत्रान्तर इति । अत्रान्तरे—अस्मिन्नवसरे, घुर्घुर इति, घोर—भयंकर, रवितु शीलमस्येति घुर्घुरघोररावी, सम्यक् प्रकारेण उद्वेजित, सैन्यचक्रं—सैन्यबन्ध, येन स तथा । कोल—वराह, शतशोऽश्वान् जङ्घान्तरे विदीर्य, एष खलु वराहस्वभावो यदय जङ्घान्तरे प्रविश्य अश्वानामण्डकोश विदारयतीति, तत्कृत्वा । अथ प्रतापशक्त्यो—प्रतापसिंहशक्तिसिंहयो, 'भ्रातुर्ज्यायसः' इति प्रतापेत्यस्य पूर्वनिपात । गोचरो दृग्विषयोऽभूत् । प्रतापशक्तिभ्या युगपद् दृष्ट इत्यर्थ ॥ ३० ॥

अक०—( सहर्षमिव ) ततस्ततः—

ऐन्द्र०—तदनन्तरम्—

आकर्णमाकृष्य निशातबाणं
चिक्षेप कोले सहसा प्रतापः ।
अलक्षितः सन्स विभिद्य लक्षं
जगाम भूमौ न च लक्षितोऽभूत् ॥ ३१ ॥

अक०—( विमनस्क इव । ) ततस्ततः ।

ऐन्द्र०—तदनन्तरम्—

शक्तेः शरश्चापि विनिर्गतोऽभूत्तेनैव मार्गेण स लक्षितोऽपि ।
हतो मया नैव मया हतोऽयमवं विवादः स तयोरयासीत् ॥ ३२ ॥

---

**सहर्षमिति** । वराहस्य महाभयकरत्वादवश्यमेव प्रतापशक्त्योर्मध्येऽन्यतरस्याय विनाश करिष्यति ।

अथ वराहदर्शनानन्तर तयो कृत्यमाह—

**आकर्णमिति** । प्रताप, निशातबाण—तीक्ष्णबाणम्, आकर्ण—कर्णपर्यन्तम्, आकृष्य सहसा कोले चिक्षेप, बाणेन वराह जघानेत्यर्थः । अत्र आकर्णमाकर्षणेन वेगातिशयित्व निशातत्वेन अप्रतिहतशक्तितया अन्तर्गामित्वं सूच्यते । स बाण प्रक्षेपसमनन्तरमेव अलक्षित सन्, लक्षं—वराहरूप शरव्य, विभिद्य तत्रान्त. प्रविश्य, भूमौ जगाम, तदनन्तरमपि न च लक्षितोऽभूत्, भूमावपि प्रविवेशेति नैव लक्षितो जात इत्यर्थ । वराहं विभिद्य भूमावन्त· प्रविष्ट इति तात्पर्यार्थ ॥ ३१ ॥

**विमनस्क इवेति** । प्रतापशक्त्योर्न नाशो जात, किन्तु वराहस्यैव नाशो जात इति हेतोर्विमनस्क इव अकबर सजात ।

अथ वराहतनो प्रतापबाणनि सरणानन्तरमाह—**शक्तेरिति** । शक्ते शक्तिसिंहस्यापि च शर, तेनैव मार्गेण—येन मार्गेण प्रतापस्य शरो नि सृतस्तेनैव मार्गेण, विनिर्गतोऽभूत्—बहिर्विनि सृतोऽभूत् । स लक्षितोऽपि, बहिर्निस्सरणसमये निस्सरणानन्तर च सर्वैर्दृष्ट इत्यर्थ । एतेन प्रतापबलापेक्षयाऽस्य स्वल्पबलवत्त्व सूचित भवति, यतो हि प्रतापशरो वराह विभिद्य

अक०—( पुन सहर्षमिव । ) साधु साधु ! ततस्तत —

ऐन्द्र०—तदनन्तरं साभिमानं प्रतापेनोक्तम् ।

आवयोर्निर्णयं खड्गः स्वयमेवाचरिष्यति ।
जयो यस्य भवेदत्र तेनैव निहतः किरि' ॥ ३३ ॥

अक०—शक्तिसिंहोऽपि शूरः, मन्ये प्रतापोक्तं वचो नैव मृष्येत ।

ऐन्द्र०—युक्तं भवद्भिः संभावितम् । शक्तिसिंहेन तद्वचो नैव मृष्टम् ।

अक०—ततस्ततः—

ऐन्द्र०—तदनन्तरं 'नैतद् युक्तम्, मैवं विदध्याः, भ्रात्रोः संग्रामो नैवोचितः, इति वदत्स्वेव पुरोहितादिषु द्वावपि प्रतापशक्ती स्वस्वकुन्तौ समुत्थाय योद्धुं सन्नद्धौ ।

अक०—ततस्ततः—

ऐन्द्र०—ततः क्रोधास्फुरिताधरोष्ठौ आरक्तविशालविस्फारित-

---

निर्गतोऽलक्षितश्च । शक्तिशरस्तु वराहशरीरमविभिद्य प्रतापशरनिर्मितमार्गेणैव निस्सृतो न भूमौ प्रविवेश, किन्तु बहि पतित , सर्वैर्लक्षितश्च । अत एव वास्तविकेऽपि प्रतापकृतविघाते प्रमाणाभावात् , अवास्तविकेऽपि शक्तिकृतविघाते प्रमाणोपलब्धे· 'मया प्रतापेन अय हत , नात्र त्वदुक्तौ किमपि प्रमाणम्' 'मया शक्तिसिंहेन अय हत ' एवं सोऽयं तयो. प्रतापशक्तिसिंहयोर्विवाद –कलह , अयासीत्–प्राप्त ॥ ३२ ॥

अथ विवादस्य भयकरताबीज दर्शयति—**आवयो**रिति । तव च मम चेति । 'त्यदादीना मिथ सहोक्तौ यत्पर तच्छिष्यते' इत्येकवद्भाव । आवयो खड्ग –खड्गपद शस्त्रोपलक्षकम् , कुन्तो वा बाणो वा । स्वयमेव, निर्णय–केन वराहो हत इति निश्चयम् , आचरिष्यति–विधास्यति । अत्र निर्णये यस्य जयो भवत्तेनैव किरिर्वराहो निहत । यस्य जयो भविष्यति स एव शूर इति कृत्वा तत्कृतमेव वराहहननमिति स्वत एव निश्चयो भविष्यतीति तात्पर्यार्थ ॥ ३३ ॥

**शक्तिसिंहो**ऽपीत्यादि सर्वं सुगमम् । युद्धादौ तयो स्वरूपं प्रदर्शयति–

नयनौ अकाण्डप्रलयकालसमुद्रसमभयंकरनिनादौ अन्योन्यमाक्रान्तुं प्रवृत्तौ ।

अक०—(मनसि) मद्भाग्येनैव विहितं तयोरायोधनं महत् ।
विनाशेऽन्यतरस्यापि सिद्धमस्मत्समीहितम् ३४

ततस्ततः—

ऐन्द्र०—ततस्सकरुणं तत्रस्थैः सर्वैरप्युक्तम्, वसुंधरे ! कथं ते दशा भाविनी ।

प्रतापः शक्तिरहितो न जेतुं प्रभविष्यति ।
वसुधे त्वा निगडिता नीचा-( इत्यर्द्धोक्ते मौनमास्थित. । )

अक०—विस्रब्धं ब्रूहि, इदं परोक्तं वचनम् ।

ऐन्द्र०—नीचानां मा वशं गमः ॥ ३५ ॥

अक०—ततस्तत —

ऐन्द्र०—तदनन्तरं रामगुरुरुभौ संबोध्येदमुक्तवान् । स्वस्वसंरम्भादुभौ विरमेताम्, अन्यथा युष्मदर्थे मया आत्मोत्सर्गः क्रियते ।

---

**क्रोधास्फुरि**तेत्यादि ।

**मनसी**ति । उभयोर्युद्धेऽवश्यमेवान्यतरस्य विनाशो भविष्यतीति मनसि विचारयन् कथयति ।

**मद्भाग्येने**ति । मद्भाग्येनैव–मदीयशुभप्रारब्धोदयेनैव, तयो –प्रतापशक्त्यो, महत्–परस्परप्राणघातकत्वेन जयजनकत्वाद्दारुणम्, आयोधनं-सग्राम, विहित–निष्पादितम् । तन्निष्पत्तौ फलमाह–अन्यतरस्यापि–प्रतापशक्त्योर्मध्ये कस्याप्येकस्य, विनाशे, अस्मत्समीहित–मेवाडस्वायत्तीकरणं, सिद्ध–सिद्धप्रायमेव । गृहकलहोत्पत्तेर्न पुनस्तत्पराजयकरणे प्रयासो विधेयो भविष्यतीति भाव ॥ ३४ ॥

पराधीनताप्राप्तेस्तवेयं का दशा भाविनीत्याह—**प्रताप** इति । शक्तिरहित –प्रतापस्य शौर्यशालितया शक्तिसिंहस्यैव नाशो भविष्यतीति शक्तिसिंहरहित, अथवा–भ्रातुर्मारणेन गृहकलहतया प्रभावोत्साहमन्त्रशक्तिरहित प्रताप जेतु म्लेच्छाधिपतिमकबरं विजेतुं न

युवयोर्जीवतोर्देशो न दास्यमुपयास्यति ।
तस्मात्स्वातन्त्र्यरक्षार्थमात्मोत्सर्गो विधीयते ॥३६॥

इत्युक्त्वा अकालजलद इव निर्घुष्य उभावन्तरा समुपास्थितः ।

अक०—ततस्ततः—

ऐन्द्र०—ततो यदा एवमपि प्रतापशक्ती स्वस्वसंरम्भान्न विश्रान्तौ, तदा पुरोहितो रामगुरु –

आयातः स रणाङ्गणे छुरिकया मध्ये द्वयोः पश्यतो-
र्भित्त्वा स्वं हृदयं क्षणेन सहसा नामावशेषोऽभवत् ।
देशस्योपकृतौ तदीयचरितं भ्रात्रोस्तयो रक्षकं
दृष्ट्वा कोऽप्यभवत्प्रजासु जननीभूरक्षणे साहसः ॥ ३७ ॥

तदनन्तरं रक्ताप्लुतदेहं भूमौ लुठन्तं मुमूर्षुं रामगुरुमवलोक्य तौ द्वावपि विश्रान्तौ ।

---

प्रभविष्यति–न समर्थौ भविष्यति । हा इति शोके । हे वसुधे ! सर्वसमृद्धिसम्पूर्णे ! त्वं निगडिता–परायत्तत्वेन पदयोर्बद्धा सती, नीचाना यवनजातीयाना, वश, मा गम –न प्राप्नुहि ॥ ३५ ॥

अथ रामगुरुरात्मघातोद्देश्य श्रावयति–**युवयो**रिति । युवतोर्जीवितो ,देश -अस्माकं मातृभूमिर्मेवाड , दास्य न उपयास्यति–दास्यता नैवोपगमिष्यति । तस्माद् देशस्वातन्त्र्यरक्षार्थम् आत्मोत्सर्ग –आत्मघात , मया विधीयते, यथा सहर्षं देशरक्षार्थं मया प्राणत्याग क्रियते तथैव युष्माभिरपि कर्तव्यम्, देश-स्वातन्त्र्यार्थं प्राणास्तृणवत्त्याज्या इति तदाशय । अन्यत्सर्वं सुगमम् ॥३६॥

अथ रामगुरो कृत्यमाह—**आयात** इति । स –रामगुरु , पश्यतोर्द्वयो प्रतापशक्तिसिंहयोर्मध्ये, रणाङ्गणे-यत्रोभौ युद्ध कृतवन्तौ तत्र, आयातः सन्, छुरिकया, सहसा–अकस्मात्, क्षणेन–क्षणमात्रेण, स्व–स्वकीयं, हृदयं, भित्त्वा-विदीर्य, नाम एव अवशेषो यस्य स तथोक्त , नाममात्रावशिष्ट -प्राण-रहितोऽभवत् । तयो –पूर्वोक्तयो , भ्रात्रोः-प्रतापशक्तिसिंहयो., रक्षक, देश-स्योपकृतौ–देशोपकारार्थे, तदीयचरित–देशस्वातन्त्र्यार्थं स्वकीयप्राणत्यागरूपं रामगुरो कृत्य, दृष्ट्वा, प्रजासु-प्रजामध्ये, जननी चासौ भूस्तस्या रक्षणे-मातृ-

अक०—आः ! किमिदं जातम् । ततस्ततः—

ऐन्द्र०—तदनन्तरं किमिदं जातमिति प्रतापे कथयत्येव रामगुरुः पञ्चत्वमापन्न' । हा गुरो ! क्व गतोऽसि इति रुदन्नेव प्रतापः शक्तिसिंहं संबोध्येदमवोचत्-रे शक्ते ! त्वत्कृते एव इयं ब्रह्महत्या जाता, तस्मात्त्वं मेवाडभूमेरपसर ।

अक०—ततस्तत.—

ऐन्द्र०—तदनन्तरं शक्तिसिंहोऽपि नि.श्वस्य साश्रुनयनः सर्वान्सालुम्बकर्णादीन्विलोक्य भूमिं प्रणम्येदमुक्तवान् ।

क्षमे ! क्षमस्वैतदवेहि सूनुः कुक्षौ न जातस्तव दुर्जनोऽयम् ।
मेवाडदेशं यदयं श्मशानतुल्यं विधायैव सुखं मिमीते ॥३८॥

इत्युक्त्वा परावृत्य सवेगं तत्स्थानात्प्रचलितः । तदनन्तरं सकरुणं विलपन्तं प्रतापमवलोक्य सर्वे तदुन्मुखा अभवन्, अहमपि तेषां चक्षूंषि प्रतार्य शक्तिसिंहमनुप्रचलितः ।

---

भूमिरक्षाया कोऽपि लोकातिशायित्वादनिर्वचनीय साहस अभवत् । तथाभूत तत्कृत्यमवलोक्य सर्वेऽपि तृणवत्प्राणानमन्यन्तेत्यर्थ ॥ ३७ ॥

अकबर कथयति—**आः किमिद**मिति । अन्यतरविनाशेन प्रजासु भेदो न जात., प्रत्युत तद्वैपरीत्येन प्रजासु स्वमातृभूमिरक्षणे आत्मत्यागभावोऽजायत । **त्वत्कृते एवे**ति । अत्र त्वमेवापराधी । तव लघुत्वाद् गुरुकथनानन्तरमप्यविरामात्, ज्येष्ठस्य ममानादरकरणाच्चेय ब्रह्महत्या जाता । तस्मात्तथाभूतस्य ब्रह्मघ्नस्य पातकिन पवित्रभूमेरपसरणमेव श्रेय इति तदादिशति—**तस्मात्त्व**मित्यादिना ।

अथ शक्तिसिंहोऽपि **निःश्वस्ये**ति स्वापराधाभावं मन्यमानोऽनुचित दण्डावगते । **साश्रुनयनः** इति सालुम्बादीना वियोगात्, स्वकीयकर्तव्यविरुद्धमेवाडध्वंसनिश्चयकरणाच्च ।

अथ शक्तिसिंहनिश्चयं प्रदर्शयति—**क्षमे** इति । क्षमे—क्षमास्वरूपे, परमसहनशीले, क्षमस्व—उचितकर्तव्यतापरित्यागेन ममापराध क्षमस्व । वा-अथवा, पक्षान्तर दर्शयति त्वमेतदवेहि जानीहि । अयं-प्रत्यक्षतया विद्य-

अक०—ततस्ततः—

मुह०-तदनन्तरमहं वर्त्मनि शक्तिसिंहं समुज्ज्वलयन् प्रोत्साहयंश्च इहानीतवान्। स्थापयित्वा च तं युष्मदीयायतनशालायामहमिहायातः। मन्ये स स्वयमेव स्वल्पेनैव कालेन समुपस्थास्यते, अतः परं भवन्तः प्रमाणम्।

अक०—मुहम्मद! तवैतत्कार्येण अहमतिप्रसन्नोऽस्मि, अतस्त्वां सर्वगुप्तचराणामाधिपत्ये स्थापयामि।

मुह०—अनुगृहीतोऽस्मि।

अक०—अन्यदपि। इमे स्वर्णपत्यादयः पञ्चग्रामास्तुभ्यं दीयन्ते। ( इति लिखित्वा समुद्राङ्कित विधाय तस्मै प्रमाणपत्र ददाति। )

मुह०—बाढमनुगृहीतोऽस्मि।

अक०—गच्छ, विश्राममाचर। अहमत्रैव स्थितः शक्तिसिंहं प्रतीक्षे।

( इति निष्क्रान्त ऐन्द्रजालिकवेषधारी मुहम्मद। )

( अकबर एकाकी स्थितश्चिन्तयति। )

---

मान, दुर्जन.-खल, सूनु -दुष्टपुत्र, तव कुक्षौ न जात मातृभूमिरक्षणवीरप्रसवायास्तव कुक्षिर्मादृशस्य देशद्रोहिणो दुष्टपुत्रस्य जन्म न सभवतीति त्वमेतदवगच्छ, नाय मेवाडभूमेर्जात। तथावगमने कारणमाह। यद् यस्मात्कारणाद्, अय मेवाडदेश श्मशानतुल्य विधायैव सुख मिमीते। स्वकीया मातृभूमिं श्मशानतुल्या कृत्वा सुखमसौ मनुते इति नैतादृशस्य त्वत्तो जन्म सभवतीति नाय मेवाडभूमेरुत्पन्न इत्यर्थ। अत्र पूर्वापरार्द्धगतेन अयमित्यनेनन न कथितपदत्वमाशङ्कनीयम्। तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात्॥३८॥

आयतनशालायामिति धर्मशालायाम्—यत्र पान्थास्तिष्ठन्ति। अन्यत्सुगमम्।

अक०—नाद्यापि मेवाडपतिः प्रतापो
　　　　मन्निघ्नतां याति स कण्टकारिः।
　　यावत्स्वतन्त्रो विचरेत्स भूम्यां
　　　　तावत्कथं स्यान्मम सौख्यगन्धः ॥ ३६ ॥

(विचार्य सहर्षमिव)

शक्तिरहितः प्रतापो जेतव्योऽल्पान्मयोद्यमात्।
मानसिंहो मम पदोस्तं ध्रुवं पातयिष्यति ॥ ४० ॥

(पुन किंचिद्विमृष्य) परं मान. क्षत्रियपक्षपाती विशेषतो मेवाडीयेषु बद्धादरः। तैः सह कथमसौ वैरायिष्यते। (पुनर्विमृष्य) संभावयामि दक्षिणदेशं विजित्य परावर्त्तमानो मानो मेवाडाधिपतेः प्रतापस्य सविधे तद्रहस्यपरिज्ञानाय मया सह सम्बन्धितुं चोन्मार्गेणापि उदयपुरं गमिष्यति। तत्र त्यक्तार्यमर्यादं मत्पक्षपातिनं मानं प्रतापो न संमानयिष्यति। मन्ये तेन मानोन्मुखो महाभिमानी मानस्तत्रासंतुष्टः स्यात्।

---

अथाकबरस्य चिन्तास्वरूपमाह—**नाद्यापी**ति। स –प्रसिद्ध, कण्टक इवारि –शत्रु, मेवाडपति.–यवनःना मदपाटकत्वान्मदपाटक, मदपाटक एव प्राकृते मेवाड इति सिद्ध्यति। सोऽयं लौकिकसञ्ज्ञाबोधको मेवाडस्तस्य पति, यवनमदपाटकदेशाधिपति प्रताप, अद्यापि मन्निघ्नता-मदधीनता, न याति न प्राप्नोति। यावत्स स्वतन्त्र सन् भूम्या विचरेत्तावन्मम सौख्यगन्ध -सौख्यसबन्ध, 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयो 'इति विश्व, कुत स्यात्। तत्स्वतन्त्रताया मम सौख्यसंबन्धस्य सभावनापि नास्तीत्यर्थ ॥ ३६ ॥

कथमय प्रतापो मदधीनता प्राप्स्यतीति विचारयस्तदुपायोपगते सहर्षमिव कथयति—**शक्ती**ति। मया शक्तिरहित –परित्यक्तशक्तिसिंह, प्रताप, अल्पादुद्यमात्–स्वल्पादेवोद्योगाज्जेतव्य। मानसिंहो मम पदोस्त प्रताप, ध्रुव–निश्चयेन पातयिष्यति। मानसिंहस्त मदधीनता प्रापयिष्यतीत्यर्थ ॥४०॥

( अत्रान्तरे प्रविशति दौवारिकः । )

दौवा०—जेदु जेदु महाराओ ।

जयतु जयतु महाराजः ।

अक०—किमस्ति ।

दौवा०—मेवाडओ आयाओ सत्तिसीहणामो छत्तिओ दुवारि

मेवाडत आयातः शक्तिसिंहनामा क्षत्रियो द्वारि

चिट्ठइ ।

तिष्ठति ।

अक०—सेनापतिः संदिश्यताम्, मन्नियोगाद् बहुमानपुरस्सर-मेनं प्रवेशयतु ।

दौवा०—जं देवो आणवेदि ।

यद् देव आज्ञापयति । ( इत्युक्त्वा सेनापतिं संदिशति । )

( ततः प्रविशति सेनापतिसहितः शक्तिसिंहः । )

शक्ति०—

प्रोद्यद्दर्पान्धकाराधिकृतसदसदज्ञानमूढान्तरात्मा
मिथ्याहंकारफल्गूकृतनिखिलजगद्वीरशौर्यप्रपञ्चः ।
नीचानामाश्रयाद् यो व्रजति गिरिमही भीतभीतः प्रताप-
स्तद्देशध्वंसमिच्छन् वदति भगवतो वन्दकी शक्तिसिंहः ॥४१॥

अक०—कस्मादयं प्रकोपः ।

---

**सेनापतिः संदिश्यता**मिति । अत्रायं गूढाभिसन्धिः । कदाचि-च्छक्तिसिंह एकाकिनं मामवलोक्य आक्रमेत्, तदाऽयं शूरः साहसिकश्च सेनापतिर्मम सहायको भविष्यति । लोकव्यवहारे च तेन सह प्रवेशे आदरातिशयो दर्शितो भवति ।

अथ शक्तिसिंहः स्वाभिप्रायं दर्शयन् यवनप्रथानुरूपां भगवतो वन्दना-माह—**प्रोद्य**दिति । प्रोद्यदतिशयेन विवर्धमानो यो दर्पोऽभिमानः स एव अन्धकारस्तेन अधिकृतः स्वायत्तीकृतं यत्सदसद्विषयकमज्ञानं तेन मूढः सर्वथा ज्ञानशून्योऽन्तरात्मा यस्य स तथा । मिथ्याहंकारेण पुरुषार्थरहित-वृथाभिमानेन, फल्गूकृतः-असारतया दर्शितो निखिलजगद्वीराणां-समस्त-

शक्ति०—(सक्रोधमिव) आः! मया निपातितो वराहस्तमात्मकृतं मन्यमानः प्रतापो बहुभिर्बहुशो बोधितोऽपि नामन्यत। प्रत्युत मयैव सह योद्धुमारभत। परं तु यदि रामगुरुरन्तरा स्वात्मत्यागेन नागमिष्यत्तदा स मृत एवाभविष्यत्, मन्ये तद्दैवमेव एनमरक्षयत्।

अक०—एवमेवैतत्। अस्तु। अतः परं किमभीप्सितम्।

शक्ति०—समूलं मेवाडदेशमुन्मूलयितुमिच्छामि। अतः किञ्चित्सेनासाहाय्यं प्रार्थये।

अक०—( मनसि )

आरक्तनेत्रयुगलः स्फुरिताधरोष्ठो
रोषप्रकम्पिततनुर्ज्वलदुक्तियुक्तिः।
जीर्णोऽपि तत्कथनतो नवभासमानो
द्वेषोऽस्य तन्निहनने परिशुद्ध एव॥ ४२॥

---

सासारिकशूराणा, शौर्यप्रपञ्च –पराक्रमविस्तारो येन स। मिथ्याभिमानतया स्वसदृश कमपि नायं मन्यत इति भाव। तथा य प्रताप नीचाना भिल्लमीणादीनामाश्रयात्-तेषा साहाय्यात्, भीतभीत.-अतिभीतः सन्, पर्वतमहीं–कन्दरामधित्यका च, व्रजति तदाश्रयतया तत्र तिष्ठतीत्यर्थ, तद्देशध्वसमिच्छन्-तस्य प्रतापस्य देश नाशयितुमिच्छन्, शक्तिसिंहो भगवतो वन्दकीं वदति। वन्दकीमिति 'सज्ञायाम्' इति ण्वुल्। यद्वा—'पर्यायार्हर्णोत्पत्तिषु ण्वुल्'। इत्यनेन ण्वुल्, गौरादेराकृतिगणत्वात् गौरादित्वात् ङीष्॥ ४१॥

कस्मादयमित्यादि सर्वं सुगमम्।

अकबर किमयमस्य द्वेषो वास्तविक किं वा कृत्रिम इति मनसि विचारयन्निश्चिनोति—**आरक्तेति**। आ-समन्ताद्, रक्तं-रक्तवर्णं, नेत्रयुगल नेत्रयुग्म, यस्मिन्स तथा। स्फुरित –ईषत्स्पन्दितोऽधरोष्ठो यस्मिन्स, रोषेण प्रकम्पिता तनु – शरीरं यस्मिन्, ज्वलन्ती–क्रोधावेशवशादुद्भटा, उक्तियुक्ति –कथनपरिपाटी यस्मिन्स तथा, जीर्णोऽपि–कालान्तरतया परिक्षीणोऽपि, द्वेषस्वभाव एवायम्-यत्कालान्तरेण स्वत परिक्षीयते, तत्कथनत -तदिस्यस्य कथनेन

( प्रकाशम् )

लङ्कामिवाहं मेवाडं जित्वा गर्वसमुद्धतम् ।
अभिषेक्ष्यामि तत्र त्वां यथा रामो बिभीषणम् ॥ ४३ ॥

परं तु यावन्मानसिंहो दक्षिणदेशं विजित्यायाति तावत्प्रतीक्षस्व । तदागमनानन्तरमेव-

अस्मद्दन्तावलघनघटाऽऽच्छाद्यमानप्रतापः
स्फारस्फूर्जत्सघनविचरत्सैन्यगर्जन्निनादः ।
विभ्राजिष्णुप्रचुरविलसद्बाणवृष्टिप्रसारो
मेवाडे मे भवतु जलदः संगरः सैनिकानाम् ॥ ४४ ॥

---

सह कर्मधारय । तथाभूतकथनेन नवभासमान –नव इव प्रकाशमान , क्रोध स्याधिक्यान्नाद्यापि जीर्ण इति भाव । षष्ठीतत्पुरुषे तु कृत्रिमता प्रतीयेत । तस्य-प्रतापस्य, निहनने-मारणे, अस्य-शक्तिसिंहस्य, द्वेष परिशुद्ध एव । सर्वथा वास्तविक एव विद्वेषो नात्र कृत्रिमताया लेशोऽपीत्यर्थ ॥ ४२ ॥

अथ शक्तिसिंहमुद्दिश्य अकबर कथयति—**लङ्कामिति** । स्वगर्वातिशय बोधयति । अहमकबर गर्वसमुद्धतम् अभिमानौद्धत्ययुक्त मेवाड लङ्कामिव जित्वा जय एवात्रसाधारणधर्मो लङ्कामेवाडयो , ततो गर्वसमुद्धतमिति लङ्काया न विशेषणम् । तत्र मेवाडे त्वामभिषेक्ष्यामि, यथा रामो बिभीषण मभ्यषिञ्चदित्यर्थ । एतेन बिभीषण इव त्वमपि मम साहाय्य तद्भेदस्फोटनं च कुर्विति तत्तात्पर्यार्थ ॥ ४३ ॥

अथाकबर शक्तिसिंहस्योत्साहं वर्धयन्कथयति—**अस्मदिति** । अस्माकं ये दन्तावला हस्तिनस्ते घनघटा इव-मेघपटलतुल्या , हस्तिना बहुतरत्वेन श्यामताधिक्यात् , तै आच्छाद्यमान. प्रताप -प्रतापसिंहो यत्र, यद्वा-प्रताप –प्रभावो यत्र 'स प्रताप. प्रभावश्च यत्तेज कोशदण्डजम्'इत्यमर । यत्रास्मद्दन्तावलै प्रतापप्रभाव आच्छादितो भविष्यतीत्यर्थ. । पक्षे–अस्मद्दन्तावला इव या घनघटा -मेघमालास्ताभिराच्छादित प्रताप -संतापो यत्र स । तथा–स्फार -भूयिष्ठ. 'पुरुहू पुरु भूयिष्ठ स्फार भूरि च'इत्यमर । स्फूर्जत् -वज्रनिर्घोषतुल्यः, सघन -सान्द्र ,विचरत्सैन्यानामिव गर्जन्निनाद -घुष्यमाणशब्दो यत्र । पक्षे स्फार.-भूयिष्ठ , स्फूर्जन् वज्रनिर्घोषरूप , सघनो मेघसहित

( सेनापतेरभिमुखम् ) सेनापते ! त्वमेनमार्यक्षत्रियाणां सैन्याधिपत्ये स्थापय । यावदयं सर्वान् सज्जीकरोतु ।

सेना०—यथाऽऽज्ञापयति भवान् । ( इति गन्तुमिच्छति । )

अक०—तिष्ठ तावत् । शक्ते ! तुभ्यं कान्धारप्रदेशः प्रदीयते । तस्मात्त्वयाऽस्मदीयसामन्तश्रेणिमधितिष्ठता यथारुचि मदीयगोष्ठयामागन्तव्यम् ।

शक्ति०—अनुगृहीतोऽस्मि ।

( इति निष्क्रान्ताः सर्वे । )

इति श्रीमहामहोपाध्यायमथुराप्रसादकृतौ वीरप्रतापनाटके द्वितीयोऽङ्क ।

---

विचरत्सैन्यानामिव गर्जन्निनादो मेघध्वनिर्यत्र । गर्जश्वासौ निनाद, गर्जधातो शब्दमात्रवाचकत्वेऽपि मेघशब्दे एव बाहुल्येनोपगमात् । पूर्वत्र शब्दमात्रपरत्वादवगन्तव्यम् । तथा-विभ्राजिष्णु -शोभमान प्रचुरविलसत्स्वर्णरजतादिपुञ्जतया देदीप्यमान, बाणवृष्टिप्रसार -बाणवर्षणविस्तार यत्र । पक्षे–विभ्राजिष्णु–प्रचुर विलसन् बाणानामिव वृष्टे प्रसारो यत्र । तथा जलद –जल द्यति खण्डयतीति जलद –जलच्छेदक, पञ्चमाङ्कगतकोमलमीरपर्वते जले विषप्रक्षेपेण करिष्यमाण जलच्छेदन पताकारूपेण सूच्यते । अथवा-डलयो सावर्ण्यात् जडद –जडदाता । समस्तवीराणा हननात् अवशिष्टाना युद्धादिकलाशून्याना मूर्खाणा दाता । पक्षे–जलद –जलैर्भूमिप्लावकत्वान्मेघसदृश मे–मम, सैनिकाना सगर –संग्रामो मेवाडे भवतु । अत्र 'सैनिकाना जलद.' मरणानन्तर दीयमानस्य जलस्य दातेति सर्वेषा सैनिकाना मरणाज्जलद संगरो भवतु इत्यर्थावगतेर्भाविफलबोधक प्रतापविजय सूच्यते ॥ ४४ ॥

**शक्ते तुभ्यमि**ति । तावत्त्वा कान्धारदेशाधिपतिं करोमि इति तद्देशदानाद् यथारुचि मदीयगोष्ठ्यामागन्तव्यमिति सामोक्तेश्च 'सग्रह सामदानोक्ति.' इति लक्षणात्सग्रहाख्यसन्धिर्दर्शितो भवति ।

इति श्रीमहामहोपाध्यायसर्वतन्त्रस्वतन्त्रविद्यावारिधि-पण्डितमथुराप्रसादकृतौ वीरप्रतापनाटके वैजयन्तीटीकाया बन्धुवैरनामको द्वितीयोऽङ्क ।

# तृतीयोऽङ्कः ।

( रामगुरुवियोगादत्यन्तदु खोद्विग्न पुष्पवाटिकाया मन्त्रिसहितः स्थित प्रतापश्चिन्तयति )

**प्रतापः—**

**कुत्र स्थाता गुरो ! हा निखिलनिजजनान् बन्धुमित्रस्ववर्ग्यान्**
**भार्यापुत्रांश्च भृत्यानपि तव चरिते त्यक्तसर्वस्वभावान् ।**
**हित्वैतान् हेलयैव स्वकृतसुरतनुं प्राप्य भोगान्प्रभुङ्क्ते**
**त्वं चास्से सौख्ययुक्तः कथय कथमहो त्वद्विना स्यात्प्रतापः ॥१॥**

---

अथ रामगुरोर्मरणानन्तर तद्वियोगादत्यन्तदु खेनोद्विग्न प्रताप पुष्पवाटिकायामुपवने यत्र दु खदशाया मन प्रसादार्थं गच्छति तत्र मन्त्रि सहित , प्रधानमन्त्रिसमन्वितः स्थित. सन् चिन्तयति, गुरुरेव राज्यप्रदाता, अयं देशोपकारार्थं मृत इति किमस्योपकृतये कर्तव्यमिति विचारयति ।

अथ तद्वियोगात्कथयति—कुत्रेति । हा इति खेदे, हे गुरो ! कुत्र स्थाता—क्व स्थितोऽसि, निखिला -समस्ता ये निजजना —आत्मीयजना , तान् , अथ कदाचित्तेषा दौरात्म्येन तेष्वपरागो भवेदत आह—बन्धुमित्रस्ववर्ग्यान्—बन्धव -सगोत्रा , मित्राणि सखाय , स्ववर्ग्या.—स्वज्ञातिभवा स्वसमूहपक्ष-पातिनो वा तान्, अथ तेष्वपि कारणवशाद्विराग संभवतीत्याह-भार्या-पुत्रान्, भार्या त्वदाश्रितत्वात्त्वया भर्तुं योग्या, त्वदर्धाङ्गिनी चेति न कथमपि त्यागार्हा ताम् । तथा पुत्र ' पु नाम्नो नरकात् त्रायते' इति पुत्र , त्वदुप-कारक इत्यर्थ , 'आत्मा वै जायते पुत्र' इति श्रुते त्वदात्मस्वरूप तान्, अत्र बहुवचन पूज्यत्वात् गुरुवद् गुरुपुत्रे वर्तितव्यमिति वचनात्, पुत्राणा बहु-त्वाद्वा, तथा तव चरिते-तव कार्ये त्वदर्थमित्यर्थ , त्यक्त -मुक्त , सर्वस्वे सर्व· स्वकीये वस्तुनि, भाव -स्वत्वसम्बन्धो यैस्ते तान् । अथवा-त्यक्त सर्व -स्व-भाव क्रूरादिप्रकृति यैस्ते तान् ये प्राकृतिकमपि स्वभाव परिहाय त्वदनुकूल-मेव स्वभाव वर्तयन्ति तथाभूतान् भृत्यान् । एतानिति समूहालम्बेन कथयति

नये कविर्बुद्धिमतां बृहस्पति-
विपत्प्रतीकारविधौ सदा शिवः।
तपःसु नारायणतुल्यतामितः
क्व मे स रामः स्थितिपालनक्षमः॥ २॥

( ततस्तत्रैव प्रविशन्ति कर्णसालुम्बरावतकृष्णादय। 'जय एकलिङ्गेश्वरस्य' इत्युक्त्वा सर्वे यथास्थानमुपविशन्ति। )

प्र०—मन्त्रिन् चूडावत्! रामगुरोः शुभाध्यवसायकृते स्मारकमत्र चत्वरमारचय। किञ्च—

तत्पुत्राय ग्राममेकं प्रदाय
स्थाने तस्यैवास्यतां कार्यजाते।

---

हेलयैव—अनादरेणैव, हित्वा स्वकृतेन—स्वकीयशुभाध्यवसायेन, सुरतनु देव-शरीरं, प्राप्य भोगान् भुनक्ति—सुरसपदोपभोग कुरुषे। त्व सौख्ययुक्त आस्से—त्वं सुखेनोपविष्ट, कथय तव सत्यभाषित्वात्त्वामेव साक्षिण करोमि। अहो त्वद्विना प्रताप कथ स्यात्कीदृगवस्थामापद्येतेति कथय। अहो इत्याश्चर्येण तव कथनस्याप्यविषयतेति बोध्यते॥ १॥

पुनस्तद्गुणस्मरणद्वारा तमनुचिन्तयति—**नये** इति। नये—नीति-विषये, कवि—शुक्राचार्य, शुक्राचार्यस्य नीतिविषये प्रसिद्धि, बुद्धिमता मध्ये बृहस्पति, साक्षाद्बृहस्पतिरेवेत्यर्थः, तथा विपदामापत्तीना प्रतीकार-परायणे—तन्निवृत्तितत्परताया, शिव—साक्षान्महादेव एव। तप सु—तप-श्चर्यासु नारायणतुल्यतामित, बदरिकाश्रमे नारायणरूपेण विष्णुना तपो-ऽकारीति प्रसिद्धम्। पूर्वत्राभेदेन प्रतिपादनम्, इह तु सादृश्येनेति। तत इद बोध्यते न तथा तपसि नारायणसदृशो गुरुरस्ति यथाऽन्यकार्येषु। स स्थितिपालनक्षम-मर्यादापालनसमर्थः, मे-मम, राम-रामाख्यो गुरु क्व। तस्येदानी नाशान्न जाने स कुत्रास्तीति तत्स्थितेरप्यज्ञानात्तत्प्राप्तेस्सर्वथा ऽसभव एव। तेन निर्वेदातिशयो व्यज्यते॥ २॥

**जय** इति। एकलिङ्गेश्वरस्य शिवस्योपासकत्वात्तस्यैव जयं कथयन्ति। जय सर्वोत्कृष्टतया स्थितिरस्तु। **यथास्थानमि**ति। स्थानमनतिक्रम्येति

आचार्यः स्यात्सर्वकार्येषु चायं
देशोन्नत्यै धर्मकार्याणि कुर्यात्॥ ३ ॥

चूडावत्-मन्त्री—यथाऽऽज्ञापयति देवः। (इति दौवारिकेण रामगुरु-
पुत्रमाह्वयति । )

( तत प्रविशति दौवारिकेण सह रामगुरुपुत्र । )

( सर्वे प्रणमन्ति । )

गुरुपुत्रः—विजयन्तां भवन्तः ।

( मन्त्री ग्रामदानपत्र लिखित्वा प्रतापाय ददाति । प्रतापस्तत्पत्रं स्वकीयमुद्रया प्रमाणीकृत्य गुरुपुत्राय प्रयर्च्छति । )

प्रता०—भो गुरुपुत्र ! अद्य प्रभृति गुरोः स्थाने क्रियते ।

गुरुपुत्रः-दुर्वहारिधरणीधवेन्दुभानाशनद्युमणिकान्तिभासुरः ।
नीतिवल्लिपरिवर्धनाम्बुवाड् राजतामवनिपः प्रतापराद् ४

---

यथास्थानम् । चत्वरमारचय । एतेच प्रतापस्य कृतज्ञता व्यज्यते ।

रामगुरो कार्यस्य प्रत्युपकार तत्पुत्रे दर्शयति—तत्पुत्रायेति। तस्य रामगुरो पुत्राय एक ग्रामं प्रदाय कार्यजाते सकलकर्मकाण्डादिप्रक्रियाया तस्यैव स्थाने अयमास्यताम्, तत्स्थानापन्नतया अयमुपवेश्यताम् । अय सर्व-कार्येषु च आचार्य. स्यात्। अयमेव पूजनादिसर्वकार्याणामधिष्ठाता भवतु । तथा देशोन्नत्यै धर्मकार्याणि-अनुष्ठानदेवार्चनादीनि, कुर्यात्-विदध्यात् ॥३॥

अथ मन्त्री प्रतापाज्ञा साधयितुं गुरुपुत्रमाह्वयति । अन्यत्सुगमम् । मुद्रया प्रमाणीकृत्य—एतेन सर्वथा अनुल्लङ्घनीयत्व तद्दानपत्रस्य व्यज्यते ।

गुरुपुत्रो दानपत्रलाभानन्तरं पुनराशिषं ददाति—दुर्वहारीति। दुर्वहा - दुर्धर्षाः, ये अरिधरणीधवा —शत्रुराजान ,ते एव इन्दुभा , चन्द्रकान्तय , तासा नाशने, द्युमणिकान्तिरिव-सूर्यप्रभेव, भासुर -देदीप्यमान , राज्ञा भाभिरभेदा-रोपात्तेषा 'तव समक्ष' स्त्रिय इव भीरुत्व कातर्यातिशयश्च द्योत्यते । यद्वा-धरणीधवा राजानस्ते एव इन्दुस्तस्य भाया कान्ते , नाशने सूर्यकान्तिभासुर , यथा सूर्यकान्त्या चन्द्रदीप्तेर्नाशो भवति एव शत्रुराज्ञा भासामपि तव समक्षं नाशो भवति, तेषा भासा नाश पराजयान्नाशाद्वा । तथा नीतिरेव वल्लिस्त-

प्रध्वस्तपापपटली निहिताङ्गवल्ली
निह्लाददापनविधौ सुरुची निकामम् ।
मूर्तिः पदौ भवविभेदनमानसानां
नेत्राणि तावकमनःपरिपूरणाय ॥ ५ ॥
संपत्तिसंप्राप्तिविधौ सुसाधू
राजत्कलानाथरुची रणेषु ।

---

स्या परिवर्धने अम्बुवाट्-मेघरूप । यथा मेघो लता वर्धयति तथैवायमपि नीर्ति वर्धयति । 'सर्वतोऽक्तिनर्थादि'ति ङीषो वैकल्पिकत्वात् धरणीत्यत्र ङीष् । वल्लिरित्यत्र न ङीष् । अवनिप -पृथ्वीपति , प्रतापराट्-प्रतापराजः, राजताम्-सर्वेषा विजयेन देदीप्यताम् ॥ ४ ॥

अथ स्त्रियामेकवचनस्य, पुंसि द्विवचनस्य, नपुंसके बहुवचनस्य विशेषणद्वारा विचित्रश्लेषेण वर्णयन् पुनराशिष ददाति—**प्रध्वस्ते**ति । प्रध्वस्ता-नाशिता, पापपटली ययेति मूर्तिविशेषणे 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष् स्त्रियामेकवचने, तथा प्रध्वस्ता पापपटली याभ्यामिति पदयोर्विशेषणे 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे 'प्रथमयो पूर्वसवर्ण' इति पूर्वसवर्णदीर्घे द्विवचने साधु । तथा नेत्रविशेषणे बहुवचने प्रध्वस्तपापपटलीनीति बोध्यम् । तथा निहिता -स्थापिता , अङ्गरूपा वल्ल्यो यत्र, मूर्तिविशेषणे—हस्तादिरूपाङ्गवल्ल्य , पदोर्विशेषणे अङ्गुल्यादयोऽङ्गवल्ल्य । नेत्रविशेषणे—हिता -हितकरा अङ्गवल्ल्यो यत्र । नेत्रेषु हस्तादीना हितकरत्वात् । तथा—निह्लादस्य नितरामानन्दस्य दापनविधौ निकामं यथेष्ट सुरुची शोभना रुचिर्यस्या , ययोर्वा । नेत्रविशेषणे काम सुरुचीनि । 'काम प्रकाम पर्याप्त निकामेष्ट यथेप्सितम्'इत्यमर । साधुत्व पूर्ववत् । भवस्य-ससारस्य,विभेदने-नाशने, मानसं येषा ते तेषा ससारतारकाणा मूर्ति , पदौ, नेत्राणि, तावकमन परिपूरणाय । अस्ति स्त सन्ति इति कर्तृभिराक्षिप्यन्ते ॥ ५ ॥

अथ पुन स्त्रियामेकवचनेन, पुसि एकवचनद्विवचनाभ्या शब्दचित्रता दर्शयन्नाह—**संपत्ती**ति । सपत्ते सप्राप्तिविधौ सुसाधु , राजदित्यस्योत्तरत्वात् 'रोरि' इति लोपे 'ढ्लोपे पूर्वस्य दीर्घोऽण ' इति दीर्घे सिद्ध्यति ।

मूर्तिर्हरेर्वाग्निचयः पदौ च
प्रताप ! ते सौख्यततिं विधत्ताम् ॥ ६ ॥
( इत्याशिष ददाति । )

सालुम्बः—महाराज ! गुरुपुत्रः पण्डितप्रवरः कविवरश्च ।

प्रता०—अत एव गुरुपदे स्थाप्यते ।

( तत प्रविशति मानवृत्तपरिज्ञानाय प्रेषित प्रतापानुचर । )
( अनुचरो दूरत प्रताप विलोक्य चिन्तयति । )

अनुचरः-सिन्दूरारुणनेत्रकान्तिरुचिरः प्राभातिकेन्दुद्युति-
र्देहे किंचिदसौ दधत् शिथिलतां भूमावुपेक्षास्थितः ।
मन्दं मन्दमिव ब्रवीति किमपि प्रम्लानचेतोऽन्तरः-
खिन्नः किन्नु निशाप्रजागरवशात्किं वा शुचा सङ्गुरोः॥७

---

द्विवचने पदोर्विशेषणे सुसाधू इति । तथा रणेषु—सग्रामेषु, राजन्ती-देदीप्यमाना कान्तियुक्तत्वात् कलानाथस्य रुचिरिव रुचिर्यस्या , यस्य, ययोर्वा हरे-र्मूर्ति शरीर, वाग्निचय -वाचा समूह , शब्दतोऽर्थतश्च कलानाथकान्ति-सादृश्यमत्रावगन्तव्यम्, पदौ च चरणौ च, हे प्रताप ते तव सौख्यततिं—सौख्यपरंपरा, विधत्ताम् । मूर्तिर्वाग्निचय इत्यनयोराकाङ्क्षायामात्मनेपदे एकवचने विधत्तामित्यवगन्तव्यम् । अत्र पद्यद्वये शब्दचित्रत्वेऽपि व्यङ्ग्यत्व-मव्याहतमिति नावरकाव्यत्वम्, तथा मूर्तिचरणनेत्रेषु त्रिष्वपि समानतया पापनाशकत्वसामर्थ्यवर्णनाद्भक्त्यतिशयो व्यज्यते । एवमुत्तरपद्येऽप्यवगन्त-व्यम्, विस्तारभिया न प्रदर्श्यते ॥ ६ ॥

पण्डितप्रवर·—पण्डितेषु प्रकृष्टो वर प्रवर विशिष्टोऽस्ति। **अत एवे**ति। एतेन स्वस्योचितकारित्व द्योत्यते ।

अनुचर· खेदजागरणयो साधारण्यमवलोक्य तर्कयति—**सिन्दू-रे**ति । सिन्दूर इव अरुणे—किञ्चिद्रक्ते, ये नेत्रे तयो· कान्त्या—सौन्दर्येण रुचिर —मनोहर , प्राभातिक —प्रभातकालीन , य इन्दुश्चन्द्रस्तद्वत् द्युतिर्यस्य, किञ्चित् शुक्लता शयनानन्तरं शोके च भवति, अथ च देहे-शरीरे, किंचित् शिथिलता दधत्, भूमौ उपेक्षया—उपेक्षाबुध्या,

( तत प्रविशति प्रतापसमीपेऽनुचर )

अनुचरः—जयतु जयतु महाराजः !

प्रता०—कथय क्वेदानीं मानः ?

अनु०—दक्षिणदेशं विजित्य अभिमानसमुत्पूरितान्तःकरणो भवन्तं स्वविभवं दर्शयितुमुन्मार्गेणैव उदयपुराभिमुखं प्रचलितः ।

प्रता०—सालुम्ब ! एतदागमने कोऽप्यत्र गूढाभिसन्धिः स्यात् ।

सालु०—( किंचिद्विमृष्य ) मन्ये स्वविभवं भवन्तं दर्शयितुं समायाति । अथवा आत्मवद् भवन्तमपि यवनैः सार्द्धं सम्बन्धयितुमभिकाङ्क्षते ।

प्रता०—(वीरासनस्थ सन् खड्गमाकर्षति ।) आः ! क एवं मयि स्थिते यवनैः सार्द्धं मां सम्बन्धयितुं प्रभवति ।

सालु०—एवमेवैतत्, परमयं तस्य गूढाभिसन्धिरुच्यते ।

---

स्थित निशाया विचारपरपरयाऽतिजागरणेन आलस्यात् शोकाच्चैव भवति । प्रम्लान चेतोऽन्तर यस्य स , असौ प्रताप , मन्दं मन्दम्—अतिमन्द किमपि ब्रवीति इव, किमपि कथयतीव । न खल्ववगम्यते स्पष्टतया कथयत्येवेति । किन्तु निशाप्रजागरवशात् शक्तिसिंहस्य तथाविधा प्रतिज्ञा विधाय गमनात्सगरस्य प्रतापपक्षपातितयाऽवस्थानाद्विचारपरंपरया रात्रावतिजागरणात् खिन्न । किं वा सद्गुरो –उचितकारितया निष्पक्षस्य राज्यदापयितुर्गुरो , शुचा–शोकेन, खिन्न –दु खित , अत्र वर्णितानां धर्माणामुभयसाधारण्येन ऊहाख्यो सन्दिग्धर्व्यज्यते ॥ ७ ॥

**उन्मार्गेणैवेति** । आगरा गतवतस्तस्य गमनमार्गो नाय किन्तु स्वमार्गं परित्यज्य स्वविभव दर्शयितुमनेन मार्गेणागच्छतीत्यर्थ । यद्वा–आर्यमर्यादा परित्यज्य त्वा यवनै. सम्बन्धयितुमित्यसदभिलाषयाऽऽगच्छतीत्यर्थ । अन्यत्सुगमम् ।

प्रताप सालुम्बोक्तं परमार्थतो मन्यमान खड्गमाकर्षति—**आः क एवं मयी**त्यादि कथयति च । अथ सालुम्ब 'तस्य गूढाभिसन्धिरुच्यते न

प्रता०—सर्वथा असंग्राह्योऽयम् ।
पितुः स्वसुर्दानवशेन लब्धां मानप्रतिष्ठां शतशो धिगस्तु ।
म्लेच्छादिसंसर्गिविदुष्टपङ्क्तौ भुङ्क्ते कुलीनोऽपि किमार्यजातः ८
कर्णः—नहि नहि, कदाचिदपि कोऽप्यार्यभवः कुलीनस्तत्पङ्क्तौ नैव भोद्यते ।
प्रता०—परं मन्ये, तेनापमानेन मानो वैरायिष्यते ।
कर्णः—वैरोत्पादने दोषः कस्येत्यपि विचारणीयम् । स्वयमेवासौ मानः कथं नैव विचारयति ।
अधः प्रवृत्तौ परिवर्तमानोऽप्युच्चप्रवृत्तौ यदि धावति द्राक् ।
तदा पतेदत्र स एव दोषी •

---

तु परमार्थत इदमुच्यते इत्यभिप्रायेण प्रताप सान्त्वयति ।

अथ प्रतापो मानमपाङ्क्तेयं दर्शयति—**पितुरिति**। पितु[1] स्वसुर्भगवान्दासस्य भगिन्या दानवशेन लब्धा-प्राप्ता, मानस्य प्रतिष्ठा मानमहत्त्व शतशो धिगस्तु । म्लेच्छादीना ससर्गोऽस्यास्तीति म्लेच्छादिससर्गी, तेन विदुष्टाया पङ्क्तौ—यवनसबन्धिविदूषितपङ्क्तौ, आर्यजात —आर्योत्पन्न । एतेन गूढवर्ण सकरनिरास क्रियते, कुलीनोऽपि—उत्तमकुलोत्पन्नोऽपि, 'महाकुलकुलीनार्यसभ्यसज्जनसाधव ' इत्यमर , किं भुङ्क्ते । नैवेत्यर्थ ॥ ८ ॥

अथ कर्ण वैरोत्पादने मानस्यैव दोषं मन्यमानो दृष्टान्तेन समर्थयति—**अधःप्रवृत्ता**विति । यदि कश्चित्पुरुष अध प्रवृत्तौ परितो वर्तमान एव उच्चप्रवृत्तौ द्राक्—आपातत शीघ्र, धावति । तदा यदि निपतेत्, अत्र स एव उच्चप्रवृत्तौ धावक एव दोषी, नात्र कस्यचिदप्यन्यस्य दोषोऽस्तीत्यर्थ । अयं भाव —यदि मानो यवनसंबन्धेन स्वज्ञातिं द्विषन्निति अध प्रवृत्तौ वर्तमान अस्माभि सह भोजनादिसंबन्धेन उच्चप्रवृत्तौ धावति, एव सति अस्माभि-

---

१ भगवान्दासस्य मानसिंह कृत्रिमः पुत्र । तद्भगिनी अकबराय दत्ता, मानसिंहभगिनी वेत्यत्र मतभेद । वस्तुतस्तु दासीपुत्री सेत्यत्र न कस्यापि विप्रतिपत्ति । एव च मानसिंहपितुर्दासीपुत्री सा भगवान्दासपितुर्वेति काकदन्तपरीक्षावन्नि.सारमेवैतदिति ।

प्रता०—
.. . .. .. . .. न बुध्यते इत्यपि बुद्धिसाध्यम् ॥ ९ ॥
यद्यपि मानस्यैव दोष इति सर्वथा युक्तं तथापि नासौ विचारयति।
सालुम्बः—शौर्यमदोन्मत्तो भवन्तं भोजनादिसंबन्धेन संबन्धयितुमेवेच्छन्नसावभिगच्छति।
प्रता०—युक्तं संभाव्यते, परं तु—
संबन्धने सकलशास्त्रविरोधचर्चा
त्यागे कृते तु समरः पतितो गले स्यात्।
(अस्तु) मानो विलोकयतु मे समरप्रयोगं
मानं विहाय यदि नैव पलायतेऽसौ॥ १०॥

---

रस्वीकारात्, तदाऽपमानितो भवेत्। स्वभावसिद्धमेतत् यन्नैवंविधस्य कुलीना सहभोजनादिना सग्रह कुर्वन्ति। द्रागुच्चैर्धावन्नवश्यं पतति। अत्र अपमाने पतने च स एव तथाविधकार्यकर्ता मान एव, अथ च—तथा धावकश्च दोषी। एव च मानस्यैवात्र दोष।

अथ प्रताप कर्णोक्तिं समर्थयन् कथयति—**न बुध्यते** इति। इदं मया न बुध्यते इति विवेकोऽपि बुद्धिगम्य एव। स चैवविध प्रज्ञारहितो यदात्मन प्रत्यक्षतया स्फुटमपि दोष न पश्यतीत्यर्थ ॥ ९ ॥

अथ प्रताप कथयति—**युक्त**मिति। यत्त्वया सभावित 'भोजनादिसंबन्धेन सबन्धितुम्—इति तद् युक्तमेव सभावितम्, अहमप्येवमेव संभावयामि। परमत्र किं करणीय किं वा न करणीयमिति प्रदर्शयति—**संबन्धने** इति। तेन सह भोजनादिसबन्धस्वीकारे सकलशास्त्राणा विरोधस्य चर्चा—विचारणाऽस्ति। सकलशास्त्रेषु तथाभूतस्य भोजनादिसबन्धे प्रतिषेधात्सकलशास्त्राणा विरोधः प्रसज्यते, स च दुष्परिहार। अथ शास्त्रमर्यादानुकूल्येन त्यागे-सहभोजनादिसंबन्धस्य त्यागे कृते तु, समर.-संग्राम, गले पतित स्यात्। अनभिमतोऽपि संग्रामो भविष्यतीति सभावयामि। एव सति शास्त्रमर्यादात्यागमसहमान सग्राम स्वीकरोति—मानो मानसिंहो मे मम समरप्रयोग—संग्रामकौशल्यं, शूरा कथं युध्यन्तीत्यादि विलोकयतु। यद्यसौ मानो मानं-

( इति खड्ग परामृषति )

सर्वे—वयं सर्वे संनद्धाः स्मः । यवनानां कृते आत्मजातिमास्कन्दत्यसौ, किमनेन शोभनं स्यात्, न खलु वयं समराद्बिभीमः ।

क्षत्रियाणां कृते धर्म्यं यदि युद्धमुपागतम् ।
अत परमभीष्टं किं यत्स्यान्मोक्षपदात्परम् ॥ ११ ॥

मन्त्री—परमसौ अतिथिः, अतो लौकिकव्यवहारेण भोजनादिसत्कारः कर्तव्यः । तदीयगूढाभिसन्धिज्ञानानन्तरं यद्भविष्यति तद् द्रक्ष्यामः । तदनुचरितं चरिष्यामश्च ।

प्रता०—एवमेव भवतु का हानिः ।

( तत प्रविशति दौवारिक । )

दौवा०—जेदु जेदु महाराओ ।
जयतु जयतु महाराज ।

---

स्वाभिमान विहाय नैव पलायते । स्वाभिमान विहाय पलायने एव मानप्राणरक्षा भविष्यति, अन्यथा सग्रामे मानो मया हत एव भविष्यतीति भाव । एतेन भाविसंग्रामे मानस्य प्रतापसमुखानागमन सूचित भवति ॥ १० ॥

अथ सर्वे स्वसिद्धान्तं कथयन्ति-**न खलु वयं समराद्बिभीमः** इति। ततोऽभये कारण प्रदर्शयन्ति **क्षत्रियाणा**मिति। यदि क्षत्रियाणा कृते–क्षत्रियसुखप्राप्त्यर्थं धर्म्य–धर्मादनपेत धर्मानुगत शास्त्रमर्यादारक्षणोद्देश्यकमित्यर्थ', युद्धमुपागतं-प्राप्त, स्यात् अत परमभीष्ट किमस्ति यन्मोक्षपदात्-मोक्षस्थानात्, परमधिक स्यात् । स्वर्गात्तु क्षीणे पुण्ये मर्त्यलोके विशन्तीति पुन पुनर्दु खानि भवन्ति । मोक्षे तु 'न स पुनरावर्तते न स पुनरावर्तते' इति श्रुते सर्वथा दु खोच्छेदात्सुखमेव । संग्रामे मृतस्य मोक्षो नियत एव । उक्त हि "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिहतश्च य " । मोक्षस्थान सूर्यमण्डलादुपर्येवेति ॥ ११ ॥

**परमसा**वित्यादि सर्वं सुगमम् ।

प्रता०—किमस्ति वक्तव्यम्?

दौवा०—माणागमणवुत्तंतणिवेअओ एक्को भोदीओ सेणाअरो
मानागमनवृत्तान्तनिवेदक एको भवदीय सेनाचर
पुप्फवाडिआओ दुआरि चिट्ठइ।
पुष्पवाटिकाया द्वारि तिष्ठति।

प्रता०—प्रवेशय।

( ततो दौवारिकेण सह प्रविशति सेनाचर। )

सेनाचरः—जेदु जेदु महाराओ।
जयतु जयतु महाराज।

प्रता०—कथय केदानी मान.।

सेना०—इयाणि माणसीहो सव्वं पि सेणासंरोहं उदेउरस्स
इदानीं मानसिंह सर्वमपि सेनासरोहमुदयपुरस्य
दक्खिणभाअम्मि सण्णिवेसिय कइवएहिं सेणासंभावि
दक्खिणभागे सनिवेश्य कतिपयै सेनासम्भावि-
अपुरिसेहि सईयपासअराणुअरेहि चेव सह उदेउरं
तपुरुपै स्वकीयपार्श्वचरानुचरैरेव सह उदयपुर
पविसमाणो भोदीयणिवासगिहाहिमुहं आगच्छइ।
प्रविशन् भवदीयनिवासगृहाभिमुखमागच्छति।

प्रता०—मन्त्रिन्! त्वं कुमारं पुरस्सरीकृत्य बहुमानपुरस्सरं मानं प्रवेशय। स्नानभोजनादिप्रबन्धं च बहुमूल्यसुशोभनद्रव्यैर्मधुराम्ललवणकट्वादिरसास्वादितैर्नानावि-

---

कषायतिक्तभोजनाना नीरसत्वान्न तदुपादान कृतम्। नानाविधैरनेकप्रकारैरुपस्करणै साधनै शर्करान्नघृतमरिचादिभिः ये सपाद्यमाना भक्ष्यादय, तत्र भक्ष्य घृतादिभ्रष्ट चणकादि, मुद्गद्विदलादि वा, मृदु शुष्क भोजनार्हमित्यर्थ। भोज्य शुष्कुल्यादिकम्, लेह्य श्रीखण्डादिकम्, गुर्जरदेशे प्रसिद्धम्। चोष्यमाम्रादिकम्। चर्व्य तिलपर्पटकम्। इत्यादिरूपैर्विविधपदार्थजातै अनेकविधपदार्थभेदैर्भोजनप्रबन्ध विधेहि। यथासभावितम्—संभावितमनतिक्रम्य। सभावितानुरूपमित्यर्थ.।

धोपस्करणसंपाद्यमानभक्ष्यभोज्यलेह्यचोष्यचर्व्यादिविविधपदार्थजातैर्विधेहि । सह भोजनाय यथासंभावितं व्याजः प्रदर्शनीय । कुमारोऽपि सहभोजने नैव नियोक्तव्यः । सालुम्ब ! त्वमपि तदातिथ्यसत्कारेऽस्य साहाय्यं कुरु । अहमपि कर्णेन सह सौधस्थितो भूत्वा वातायनेन सर्वं विलोकयिष्ये ।

**मन्त्री—यथाऽऽज्ञापयति देवः।** (इति कुमारसालुम्बाभ्या सह निष्क्रान्त ।)

( तत स्नानपूजनादिसकलकर्मनिवृत्तो वितानाध स्थितो मान प्रतापागमन प्रतीक्षते । )

( तत किञ्चिद् दूरत. समुपतिष्ठते वीणा वादयन्ती सताल गायन्ती लोकान्प्रबोधयन्ती काचिद् योगिनी । )

( तत्समनन्तरमेव प्रविशति नानाविधद्रव्योपेतं मधुरादिरसास्वादयुत-राजभोजनमादाय सूपकार । सूपकारो मानस्य सम्मुख भोजनपात्र स्थापयति । )

( योगिनी गायति । )

**त्यज रे मान कपटमदजालम्।** (मानपदश्रवणान्मान सावहित. शृणोति।)

**भज शिवकरणमीशपदपङ्कजममरशिरोजयमालम् ।**

---

**काचिद्योगिनीति** । अनिर्दिष्टनामा योगिनी । यद्यपि इय सैव वेश्या पर तु योगमार्गाश्रयणानन्तरमनिर्दिष्टनामत्वात्काचिदित्युक्तम् । अथ मानसिंह प्रतापपक्षानुगमनायोपदिशन्ती प्रतापस्य प्रभावातिशय शिवपदसाम्येन व्यञ्जयन्ती कथयति ।

**त्यज रे** इति । रे जीव ! मानस्य—अहंत्वाभिमानस्य, कपटस्य प्रपञ्चस्य, मदस्य—औद्धत्यस्य गर्वस्य वा, जाल, त्यज—मुञ्च । अथ च—मानेति सबोधनम्, हे मान ! कपटमदयोर्जाल त्यज । तत्त्यागानन्तर कार्यमुपदिशति—शिवकरणं—कल्याणकारकम्, अमराणा—देवाना, शिरोजयमालम्—शिरसि जयमालरूपेण स्थितम्, अथवा—अमरस्य अमरसिंहस्य शिरोजयमालम्, शिरसि जयमालरूपेण स्थितम्। ईशपदपङ्कज-शम्भुचरणकमलम्, अथवा—ईशस्य ऐश्वर्ययुक्तस्य प्रतापस्य चरणकमल भज सेवस्वेत्यर्थः ।

उदितप्रतापतुल्यशुभदर्शनमहिमणिमण्डलशालम् ।
सुखसंपदापरमपदप्रापकमखिललोकपरिपालम् ॥
लसितसुरासुरयक्षनागनरकिन्नररक्षोभालम् ।
भवभयहरणमरुणसमशोभितमघचयतपनकरालम् ॥

प्रतिदिनमगपतितनयावन्दितमाशीविषवाचालम् ।
करुणावरुणालयमहिमण्डितमधरितसरसप्रवालम् ॥

---

कथ भूत चरणकमलमित्याह-उदितेति । उदितो य प्रताप सूर्य-स्तेन तुल्यम्, ईषद्रक्तमित्यर्थ । तथा शुभ–कल्याणकर दर्शनं यस्य तत्, पुनर्द्वयो. कर्मधारय । अथवा–उदितो-वर्धमानो य प्रताप प्रतापसिंहस्तेन तुल्य शुभ दर्शन यस्य । यथा प्रतापस्य दर्शन शुभकरं तथैव तस्यापीत्यर्थ । अथवा–उदित भाषितं यद् प्रताप इति पदं तत्तुल्यतया शुभ–शुभकर दर्शनं यस्य । यथा प्रतापनाम शुभकर तथैव प्रतापदर्शनमपीत्यर्थ । तथा अहीना-सर्पाणा मणिमण्डलेन–मणिसमूहेन शाल-शोभमानम् । प्रतापपक्षे—मह्या-पृथिव्या मणिभूत-श्रेष्ठं यन्मण्डल प्रदेशस्तत्रशाल–शोभमानम् । पुनर्द्वयो. कर्मधारय । तथा सुखस्य सम्पदाया, परमपदस्य–मोक्षस्य, प्रापकम् । अन्यत्र सुखसपदयोर्यत्परमपदमुत्कृष्टस्थान तस्य प्रापकम् । तथा अखिल-लोकाना समस्तचराचरससाराणा, परिपालं-रक्षकम्, अन्यत्र समस्तजनाना रक्षकम् । तथा लसित–शोभित, सुरासुरयक्षनागनरकिन्नररक्षसा भाल-मस्तक येन, सुरादीना चरणेषु निपतनात्, अन्यत्र–लसितं देदीप्यमानम् तथा सुरासुरयक्षनागनरकिन्नररक्ष सु भाभि अलम्–पर्याप्तम्, यद्वा–अल-शोभमानम्, पुनर्द्वयो कर्मधारय । तथा भवभयहरणं–ससारभयमोचकम्। अन्यत्र भवा -प्राणिनस्तेभ्यस्तेषा वा यद्भय तस्य हरणं-हारकम् । 'चल-नशब्दार्थादकर्मकाद् युच् ' इति युच् । तथा अरुणसमशोभितम्–अरुण-सदृशरक्तवर्णम् । उभयत्र समानमेतत् । तथा अघचयस्य–पापसमूहस्य, तपने-सतापने नाशकरण इत्यर्थ , कराल - भयकरम्, अन्यत्र-अघचयस्य-दुष्टप्राणिसमूहस्य, तपने-सतापने, दुष्टाना निग्रहे इत्यर्थ , करालम् । तथा प्रतिदिनम्, अगपतितनयया–पार्वत्या, वन्दितम् । अन्यत्र - पर्वताधिपते

ब्रह्मादिकसनकादिसकलऋषिसेवितमलिकुलकालम् ।
परमसुकृतसमुपागतदर्शनममृतसरोवरनालम् ॥ १२ ॥

मानः—( मनसि ) किमियं मामधिक्षिपन्ती कथयति जीवं वा ?
( प्रकाशम् ) प्रतापमाह्वय । अपरं च भोजनपात्रं सज्जीकृत्यानय ।

मन्त्री—( बद्धाञ्जलि सन् ) महाराज ! प्रतापस्य शिरोवेदनास्तीति अन्त.पुरे शेते ।

मानः—कुमार ! त्वं गत्वा तं निवेदय । मानो भोजनासनोप-

---

कस्यचिद्राज्ञ सुतया वन्दित, तत्पतित्वात् । तथा आशीविषै –सर्पै , वाचाल–कुत्सितशब्दयुक्तम् । अन्यत्र मा इति निषेधार्थे । मा आशीविषा –द्विजिह्वा , पिशुना इत्यर्थ , वाचाला -कुत्सितभाषिणश्च यत्र तत् । पुनर्द्वयो कर्मधारय । करुणावरुणालय–दयासमुद्रम्, उभयत्र समानमिदम् । अहि-मण्डित–सर्प शोभमानम्, अन्यत्र मह्या मण्डित–पृथिव्या शोभमानम् । 'सर्वतोऽक्तिन्नर्थाद्'इति ङीषो वैकल्पिकत्वात् महीति ह्रस्वान्तोऽपि । पुन करुणावरुणालय महिमण्डितयो कर्मधारय । अवरित –अत्यन्तारुण्येन नम्रीकृत , सरसप्रवाल –आर्द्रविद्रुमो येन तत्, उभयत्र समानम् । तथा ब्रह्मादिभि –सनकादिसकलऋषिभिश्च सेवितम् । अन्यत्र–ब्रह्मादिकसनकादिसकलऋषीणा या सेवा, सा सजाता अस्य, ब्रह्मादिकसनकादिसकलऋषीणा सेवाकारकम् । तथा अलिकुलेन–भ्रमरसमूहेन, काल–श्यामवर्णम् । अन्यत्र-रलयो. साम्यात्, अरिकुलस्य–शत्रुकुलस्य, काल–नाशकम् । परमसुकृतेन–अत्यन्तपुण्येन, समुपागत दर्शन यस्य तत्, उभयत्र समानम्, अमृतसरोवरस्य–मोक्षरूपसरोवरस्य, नाल–परमप्रवाहस्थानभूतम् । अन्यत्र अमृतम्–अयाचित यद्वस्तु तस्य यत्सरोवर-निवासस्थान तस्य नालम्, अयाचितस्यापि दातारम् । अमृत तदेव सरोवर तत्र नालमिव नालम्, अयाचितविषयेऽपि दातारम् । अत्र शिवप्रतापयोश्चरणधर्माणा साधारण्येन उपमालकारो व्यज्यते । तेन शिवसदृश प्रताप इति तदाराधनमवश्य कर्तव्यमिति तस्या अभिप्राय । अत कपट विहाय एतत्पक्षमाश्रयस्वेति तदुपदेश ॥१२॥

विष्टस्त्वामाह्वयति । आगत्य च यथारुचि किञ्चिदपि भुङ्क्ताम् ।

कुमारः—महाराज! भवान् भुङ्क्ताम्, पूज्यचरणा इदानीं शेरते।

मानः—कुमार! त्वं गत्वा तमुद्बोध्य समानय।

कुमारः—नाहमुद्बोधयितुं शक्नोमि।

मानः—कुमार! त्वं ममानुरोधाद् गत्वा तमुद्बोध्य कथय। नासौ मानस्त्वया विना भोक्ष्यते।

कुमा०—यथाऽऽज्ञापयति भवांस्तथा करोमि, परं पूज्यचरणानां शिरोवेदनाऽस्तीति न ते आगमिष्यन्ति।

मान०—त्वं गच्छ, कथय मत्संदेशम्। यथारुचि किञ्चिदपि भुङ्क्ताम्, नाहमन्यथा भोक्ष्ये।

कुमा०—यथाऽज्ञापयति भवान्। ( इति निष्क्रान्त )

मानः—( मनसि ) प्रतापस्य भवेदपि शिरोवेदना, परं तु कर्णजगन्मल्लादिप्रभृतयो राजवंशीयाः केचिदपि नैव विलोकयन्ते। किञ्च सत्यामपि शिरोवेदनायामागत्य सहोपविश्य किञ्चिद्भोजने का क्षतिः, नूनमयं मां तिरस्कुरुते। ( प्रकाशम्। )

मन्त्रिन्! कर्णप्रभृतयो नैव विलोकयन्ते।

मन्त्री—महाराज! ते सर्वेऽप्यद्य आखेटार्थं गताः।

मानः—किं मदागमनकारणादेव सर्वेऽपि आखेटार्थं गताः, किं वा व्याजोऽयम्।

( अत्रान्तरे मानसिंहपार्श्वचर कश्चित्पिशुन मानस्य कर्णे एवमेवेति कथयति। )

सालुम्बः—( किंचित्क्रुद्ध. सन् ) किं नाम एवमेव। भवतां मदेन आगमनं साधारणतया वेति भवन्त एव

---

मदागमनेनेति। मम आगमन–मदागमनं, तस्य कारणादिति मानस्याभिप्राय। मदेन–अभिमानेन, आगमनमित्याश्रित्य सालुम्ब कथयति-

जानन्ताम्। वयं तु सौहार्देन भवतामागमनमित्येव जानीमहे।

मन्त्री—( मानसिंहमुद्दिश्य ) महाराज ! भोजनं करोतु भवान्, शीतीभवत्येतत्।

मानः-शीतं वा नीरसं वा विरसमपि भवेत्सैकतं वाऽप्यरुच्यं
रूक्षं वाऽप्यर्द्धपक्कं लवणविरहितं दुष्कषायत्वयुक्तम्।
इष्टस्वज्ञातिमध्ये चणकक्कतमपि स्वाद्यमानं सगोत्रैः
सार्धं तद् भोज्यसौख्यं भवति तदपरं नीचवृत्त्यात्मपूर्तिः॥१३॥
मन्त्रिन्! कथं कुमारोऽपि नायातः।

मन्त्री—महाराज ! भवान् भोजनं करोतु। स चाप्यागमिष्यति। कदाचित्पितुः परिचर्यावशाच्चिरायते।

( एकाकी भोक्तुमनिच्छन्स्वापमान मन्यमानो मानश्चिन्तयति। )

मानः—शाकं नापि बुभुक्षतेऽत्र कुलजश्चैकोऽपि साकं मया
धिग्मे जीवनमेवमप्यभिमतं संबन्धसत्त्वं च धिक्।

---

प्रतापादिस्वज्ञातिरहित एकाकी मानो भोजने निन्दा प्रदर्शयन् कथयति—

**शीतमिति**। शीतं-वातदोषयुक्तम्, नीरस-मधुरादिरसरहितम्, किं बहुना विरसमपि भवेत्, विरुद्धरसयुक्तमपि स्यात्, तथा सैकतं-सिकतामयम्, अत्यन्तमृत्तिकोपेतम्, अथ वा-अरुच्यम्-अरुचिकर, मन प्रतिकूलम्, रूक्षं-घृतादिरहितम्, अथवा-अर्द्धपक्वम् अपक्वमित्यर्थ। लवणविरहितम्। तथा दुष्कषायत्वयुक्त-दुष्टकषायरसोपेत चणकक्कतमपि तद् भोजनम्, इष्टा-अभिमता या स्वज्ञातिस्तस्या मध्ये सगोत्रैः-स्वबान्धवादिभि सार्धं स्वाद्यमान, शीतादिदुष्टरसयुक्तत्वे मध्ये हास्यादिना किंचित्किञ्चिद् भुज्यमान भोज्यसौख्य भवति, तदपरं बान्धवादितिरस्कृतेनैकाकिना भुज्यमान नीचवृत्त्याऽऽत्मपूर्तिः, नीचप्रकारेण जीवनोपाय। एतेन न मे अन्नेन विना इदानीं प्राणान्तकष्टम्। अत इदं भोजनमह प्रतापानागमने सति त्यक्ष्यामीति सूच्यते॥ १३॥

किं चिन्तयतीति प्रदर्शयति—**शाकमिति**। अत्र एकोऽपि, कुलज -

मानोऽहं त्वपमानभाजनमितोऽहं मानजीवातुक
स्वल्पैरेव दिनैः फलं फलयिता तापं प्रतापे स्वयम् ॥ १४ ॥

( तत प्रविशति कुमार । )

कुमारः—महाराज! तातस्तीव्रशिरोवेदनया नैवागन्तुं शक्नोति। भवान् भुङ्क्ताम्।

( मानो भोजनपात्रात्पञ्चषौदनतण्डुलानादाय उत्तरीये बध्वा चोत्थित । )

मानः—जानाम्यस्य शिरोगदं कपटिनो मद्दण्डसंघुट्टना-
त्सोऽस्मद्वीरगणप्रभूतविशिखैर्द्वित्रैर्दिनैः सेत्स्यति।
तीक्ष्णोदग्रकृपाणकृत्तपृतनास्तीर्णत्वमादारुणं
दृष्ट्वा स्वं विषयं स्वयं प्रशमिता शीर्ष्णो गदो मूलत १५

---

कुलीन, मया साक शाकमपि न बुभुक्षते—शाकमपि भोक्तु नेच्छति, अद-नादेर्वार्ता तु दूरे एव। एवमपमाने सति मे जीवन धिक्, किमनेन जीव-नेन। अभिमतमपि सम्बन्धसत्त्व च धिक्। शिशोदियावशीया मे बान्धवा सम्बन्धिनो वा इति धिक्, न मे बान्धवा नापि सबन्धिन इत्यर्थ। अहं तु, अहं मान एव जावातुर्जीवितकालो यस्य स तथा। 'आयुर्जीवितकालो ना जीवातुर्जीवनौषधम्'इत्यमर। मान—माननामा, एतेन स्वस्य गर्वातिशयो बोध्यते। यद्वा-मानोऽभिमानस्तत्स्वरूप। अपमानभाजनम्—अपगत यद् मानं मानेति नाम तस्य भाजनम्, इत—प्राप्त, एतेन मानस्य नाशान्मम नामो-च्छेद एव जात। अथ वा मान अहमपमान प्राप्त। स्वल्पै—कतिपयैरेव दिनै, स्वयमह प्रतापे तापम् अस्य कर्मणः पश्चाद्रूपं सताप फल, फलयिता—फलयिष्यामि। अस्य कर्मण फलमह नेष्यामीत्यर्थ ॥ १४ ॥

**पञ्चषौदनतण्डुलानिति**। भोजनस्यानादरो मा भूदिति गृह्णाति। एतत्कृते एवाहमपमानित इति प्रतापपराजयानन्तरं त दर्शयितुमुत्तरीये बध्नाति।

स्वापमानमवगच्छन् कथयति—**जानामीति**। कपटिन—भोजनकरणे कैतवं प्रदर्शयत, अस्य प्रतापस्य, शिरोऽगद—शिरसोऽगदम् औषध, जानामि—अवगच्छामि। स—अगद, मम दण्डो—मद्दण्ड, तस्य तेन वा, यत्संघुट्टनं तस्मात्, अस्मद्वीरगणस्य प्रभूतै—बहुतरै, विशिखै—बाणै, द्वित्रै दिनै,

( पुना रुष्ट सन् )

सिंहः केसरलुञ्चनेन शयितः संबोध्य दुष्क्रोधितो
हस्तैः फुंकृतिघोरविस्तृतफणः कृष्णाहिरुद्बोधितः ।
प्रोद्यत्कीलकदम्बभीषणवपुर्वह्निः समालिङ्गितो
यन्मेऽकार्ष्ट तिरस्क्रियामसिपतेर्भूपालचूडामणेः ॥ १६ ॥

(पुन सरोष सालुम्बादिसमक्ष प्रतापादीन् लक्षीकृत्य प्रतिजानीते ।)

तिष्ठेन्मिथ्याशिरोऽर्तिर्व्रजति वसुमतीस्वामिसंस्तूयमानो
मानो मानप्रदाता प्रधनरिपुगणस्तूयमानासिधारः ।

---

सेत्स्यति–निष्पन्नो भविष्यति । अथ तीक्ष्णो–निशात , उदग्र –उद्भट य कृपाणस्तेन कृत्ता–छिन्ना या पृतना–सेना, तया आस्तीर्णा–आच्छादिता, या क्षमा–पृथिवी, तया, दारुण–भयकर, स्व विषय–स्वकीयं देश, दृष्ट्वा स्वय शीर्ष्णो गद. मूलत प्रशमिता । मूलत शीर्ष्णो गदस्योच्छेदान्न पुनस्तथाभूतो गदो भविष्यतीत्यर्थ ॥ १५ ॥

रुष्ट पुन कथयति—**सिंह** इति । शयित –सुप्त , सिंह , संबोध्य केसरलुञ्चनेन–सटाकर्षणेन, दुष्क्रोधित , एवं फुकृत्या–फुंकारेण, घोरा-भयकरी, विस्तृता फणा यस्य स , एवंविध कृष्णाहि -कृष्णसर्प , हस्तै-रुद्बोधित , तथा प्रोद्यन्नूर्ध्वं गच्छन् य कीलकदम्बो-ज्वालसमूह , 'वह्निर्द्वयोर्ज्वालकीलौ' इत्यमर । तेन भीषण वपु स्वरूप यस्य स तथा । वह्नि समालिङ्गित । इद तत्कृतम् । यद् भूपालाना राज्ञा चूडामणे -शिरोरत्नभूतस्य, राज्ञा मध्ये सर्वश्रेष्ठस्य, असिपते –कृपाणस्वामिन , मत्समक्ष न कोऽपि कृपाणं धारयितु प्रभवति । एवंविधस्य मे-मम, यूय तिरस्क्रिया तिरस्कारमकार्ष्ट । एतेन सिंहादीनामिव अहमपि शीघ्रमेव युष्माक हनन करिष्यामीति व्यज्यते ॥ १६ ॥

अथ प्रतापादीन् लक्षीकृत्य प्रतिजानीते **तिष्ठेदिति** । मिथ्या–कृत्रिमा, शिरोऽर्तिः–शिरोवेदना, तिष्ठेत्–आस्ताम् । वसुमतीस्वामिभि –भूपतिभि , सम्यक् स्तूयमान , मानप्रदाता–शत्रूणा मानमर्दक , मित्राणा मानवर्धक , प्रधने सग्रामे, रिपुगणै स्तूयमाना असिधारा यस्य स , यस्य खड्ग शत्रवोऽपि

चञ्चद्दोर्दण्डवन्दीकृतनिखिलजगद्भूमिपालासिहारी
मेवाडं ध्वंसयित्वा सकलमपि कुलं यावनं वो विधास्ये १७

सालुम्बः—सन्निपातरोगिणः किं किं न जल्पन्ति। याहि याहि
यत्ते शक्यं तदाचर। स्वसामर्थ्यं नावशेषयेः।

भर्तारमादाय पितृष्वसुस्त्वं संग्रामभूमिं समुपाश्रयेथाः।
तन्नाशतो वैरविधिः समाप्तो भवेत्सुखी स्यात्सकलोऽपि लोकः १८

( मान अश्वरवन्निव स्वशिविरं निर्गत । )

सौधस्थितः प्रतापः—कर्ण ! ज्ञायते मानोऽपमानं मन्यमानोऽभुक्त एव निर्गतः।

कर्णः—अहमप्येवमेव संभावयामि।

प्रता०—पश्य, कुमारसहित सालुम्ब इत एवाभिगच्छति। ततः सर्वमवगतं भविष्यति।

---

स्तुवन्ति, स मानो मानसिंहो व्रजति। इदमनर्थकर सपद्यते। अथ चञ्चद्दोर्दण्डेन—चपलभुजदण्डेन, वन्दीकृता ये निखिला जगद्भूमिपालास्तेषाम् असिहारी—तान्विजित्य तेषामसिहर्ता, अह मेवाडं ध्वमयित्वा—नाशयित्वा, सकलमपि—समस्तमपि, व —युष्माक, कुल यावन—यवनस्येद यावन यवनसबन्धि यवनमेवेत्यर्थ। विधास्ये—करिष्यामि। यत्ससर्गेण यूय मा तिरस्कुरुध्वे अह युष्मान् तद्रूपमेव विधास्यामीति स्वशौर्यातिशयो व्यज्यते ॥ १७ ॥

सालुम्ब अतितिरस्कारेण कथयति—**याही याही**त्यादि। अथ यवनेन सार्धं पितृभगिन्या सम्बन्धस्मारणेन अनादरातिशयं व्यञ्जयन् कथयति-**भर्तारमि**ति। त्वं पितृष्वसु -पितृभगिन्या, भर्तारमकबरमादाय-अनुनयादिना आनीय, सग्रामभूमिं समुपाश्रयेथा -आगच्छे.। तन्नाशतो वैरविधि समाप्तो भवेत्। तदभावाद् युष्माभि सहापि नास्माकं वैर भविष्यति। एव सति तन्नाशात्सकलोऽपि लोक सुखी स्यात्। यवनराज्यस्याभावादनर्थोच्छेदेन सर्वोऽपि लोक सुखी स्यात्। एतेन आर्यपते प्रतापस्य राज्यं सौख्यजनकमिति व्यज्यते ॥ १८ ॥

( तत प्रविशत कुमारसालुम्बौ )

प्रता०—सालुम्ब ! किमसौ मानोऽभुक्त्वैव गतः ?

सालु०—आम् ।

प्रता०—किमसावब्रवीत् ?

सालु०—सन्निपातरोगिणः कि किं न जल्पन्ति ।

प्रता०—तथापि किमसावब्रवीत् ?

सालु०—पञ्चषतण्डुलानुत्तरीये बध्वा "मेवाडं ध्वंसयित्वा सकलमपि कुलं यावनं वो विधास्ये" इत्युक्तवान् ।

कर्णः—(सक्रोधम्) मेवाडध्वंसकं मन्यमानः कथमसौ न गृहीतः ।

सालु०—अतिथिरिति कृत्वा विमुक्तोऽसौ ।

प्रता०—त्वया पुनः किमुक्तम् ?

सालु०—मया च "स्वकीयपितृष्वसुर्भर्तारमपि साधमानयेः" इत्युक्तम् ।

कर्णः—साधूक्तम्, साधु सालुम्ब! साधु! वीरोचितमेवोक्तम् ।

प्रता०—पुनः पुनः ।

सालु०—पुनरसौ त्वरितमेव स्वशिबिरं निर्गतः ।

प्रता०—पश्य, पश्य, एतत्सैन्यं द्रुततरं प्रयाति ।

मानो हित्वाऽभिमानं व्रजति लघुतरं सर्वसैन्याग्रभागे
हस्त्यश्वं पत्तियुक्तं निखिलमपि बलं क्षोभमाणं प्रयाति ।
मन्ये मानापमानात्कुपितमिव चलद् धूलिभिर्धूसराङ्गं
सीमानं लङ्घितुं द्राक् सलिलमिव महायत्नमेतद्विधत्ते १६

---

प्रतापो मानग्रहणभिया पलायमानं सैन्यं प्रदर्शयति—**मान** इति । मान अभिमान—गर्व, हित्वा इहात्यन्तानादरेण गर्वनाशात् गर्वमिहैव मुक्त्वा सर्वसैन्याग्रभागे लघुतरं पलायमानो व्रजति । **हस्त्यश्वमिति** । सेनाङ्गत्वात् 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भाव । पत्तियुक्त हस्त्यश्वं निखिलमपि—समस्तमपि, बल - सैन्य, क्षोभमाण—त्रासयुक्त सत्प्रयाति । अहमिदं मन्ये । धूलिभि —रजोभि , धूसराणि-ईषत्पाण्डूनि, अङ्गानि यस्य तत्तथा मानापमाना-

अस्त्वेतत्, इदं तु पूर्वमेव निश्चितमासीत्, यन्मानोऽपमानं मन्यमानो रुष्टो भविष्यति । उदूखले शिरोदाने मुसलात्का भीतिः । युद्धं तु निश्चितमेव ।

ताडिताशीविषसमो मानो वैरं चरिष्यति ।
गत्वा सैन्यं दृढीकृत्य क्षिप्रमेवागमिष्यति ॥ २० ॥

परमिदानीं तज्जये प्रकारो विचारणीयः ।

कर्णः—इदानीमेव सैन्यं सज्जीकृत्य आक्रमितव्यम् ।

प्रता०—स चेदानीमतिथिः, तावत्स्वसीम्नि च गमिष्यति । अथापि एतावद्भियेव द्रुततरं तत्सैन्यं प्रयाति, कथमसौ आक्रम्य ग्रहीतुं शक्यो भविष्यति । अद्य सायं सर्वान्सामन्तानाहूय परिषदि परामर्शः कर्तव्यः । सालुम्ब ! त्वमपि गच्छ, मन्त्रिणमादिश । मदाज्ञया सायं परिषत्कर्तव्या, सर्वानपि सामन्तानाह्वयतु ।

सालु०—यदाज्ञापयति भवान् । ( इति निष्क्राम्यति )

( अथ सायं सर्वसामन्तादिसहित प्रताप परामृशति । )

प्रता०—कथमसावकबरो विजेतव्यः ।

कर्णः—वयं सहस्रयोधिनस्तान् आक्रम्य विजेष्यामहे ।

---

त्कुपितमिव चलत् एतत्सैन्य सलिलमिव-जलप्रवाह इव द्राक्-शीघ्र सीमान लङ्घितु महायत्नं विधत्ते । यथा जलप्रवाह स्थानसकीर्णतया इतस्ततोऽपि गच्छति एवमेव मानसैन्यमपथेनापि गच्छति । एतेन सैन्ये भयातिशयो द्योत्यते ॥ १९ ॥

युद्धस्यावश्यभाविता प्रदर्शयति-ताडितेति । ताडितो य आशीविष –विषधरसर्प , तेन समो मानो वैर–विद्वेष चरिष्यति । विषधरसर्पस्य स्वभाव एवायं यत्ताडित सन् प्रत्यपकारमवश्यमेव करोति । सर्पसाम्येन अवश्यमेव युद्धं भविष्यतीति निश्चीयते । अथ मानस्योद्योगं दर्शयति । मान गत्वा–इहस्थानात् गत्वा, सैन्य दृढीकृत्य–सुसज्जित विधाय, क्षिप्रमेव आगमिष्यति–आयास्यतीत्यर्थ• ॥ २० ॥

चूडावत्—नहि सर्वे भवादृशाः, असंख्येयसैन्यश्च शत्रुः, तत्रापि बहवो युद्धविशारदा॰ सन्ति ।

रावतकृष्णः—तत्सैन्यागमने सति अस्माभि॰ पश्चादाक्रमो विधेयः ।

सालुम्बः—नैतत्संभाव्यते, अविच्छिन्नपङ्क्तिकास्ते आक्रमिष्यन्ते ।

भिल्लाधिपति —रत्तिम्मि सुअप्पेहिं सेणिएहिं सिविरम्मि आ-
रात्रौ स्वल्पै सैनिकै शिविरे आ
क्कमिय सव्वे णिहंतव्वा ।
क्रम्य सर्वे निहन्तव्या ।

ग्वालियरनरेशः—एवं सति नास्माकं शौर्य देवा विलोकिष्यन्ते ।

सेनापतिः—एकदा एवं भवेदपि, पुनः सावधानास्ते भविष्यन्ति । पुन॰ पुनश्च नैवं संभाव्यते ।

उपसेना०—एवं कृते शत्रोर्हानिरधिका भविष्यति । परमेवं विधाने अस्माकं जयो नैव भविष्यति । अनन्तरं ते आक्रम्य विजेष्यन्ते ।

प्रता०—मम त्वेवं प्रतिभाति । शत्रुसैनिकानद्रिमध्यगा-न्विधाय आक्रमितव्यम् ।

सर्वे—युक्तम् ! युक्तम्, परं तु केन प्रकारेण ?

प्रता०—सर्वाऽप्युपत्यका अन्नजलफलादिभिः शून्या विधातव्या ।

तत्प्रकारश्चायम्—

वन्ध्या वा सन्त्ववन्ध्याः क्वचिदपि फलिनो ज्ञायमानाः समस्ताः
क्षुद्रा दीर्घा भवेयुः खलु विटपिगणा मूलतः शोधनीयाः ।
सस्यं मूलादिकन्दं मधुकमपि लता यत्र कुत्रापि वा स्युः
तत्सर्वं नाशनीयं नहि भवतु यतो भक्ष्यलाभो रिपूणाम् ॥ २१ ॥

---

अथ प्रतापस्तत्प्रकार प्रदर्शयति—**वन्ध्या** इति । वन्ध्याः—येषु कदाचिदपि फलानि न प्रादुर्भवन्ति, अवन्ध्या —फलदातार॰ । क्वचिदपि फलिन अस्मिन्समये फलयुक्ता अपि क्षुद्रा —लघुकाया , दीर्घा —महोन्नता , विटपिगणा॰-वृक्षसमूहा , ज्ञायमाना भवेयुः, समस्तास्ते मूलत शोधनीया समूल

कूपा वाप्यः सरांसि स्वविषयचलिते सत्पथे वाऽपथे वा
यावन्त्येतानि सन्तु क्वचिदपि च भवेद् वारि वा पल्वलं वा।
तत्सर्वं नाशयित्वा मरुधरसदृशः सर्वतः स्वो विधेयो
देशोऽस्माभिर्महीध्राद् रिपुहननगतिः पूर्णतश्चापि कार्या ॥ २२ ॥
अन्नपानाद्यसंप्राप्तेर्न मां ज्ञास्यन्ति दुर्जनाः।
आक्रम्य युगपत्सर्वान् हनिष्यामोऽद्रिमध्यगान् ॥ २३ ॥

---

तान्नाशयन्तु। सस्यगोधूमाद्यन्न, मूलादि यस्य पत्र मूलञ्चोभयमपि खाद्यते, कन्दं शूरणादिकम्, मधुकमपि लता वा यत्र कुत्रापि स्यु तत्सर्वमपि नाशनीयम्। समुदायविवक्षया चैकवचनम्। एव कृते सति फलमाह—यत रिपूणा भक्ष्यलाभो नहि भवतु। भक्ष्याप्राप्ते स्वयमेव मृता भविष्यन्ति पलायिष्यन्ते वा॥ २१॥

एवं भक्ष्यालाभ प्रदर्श्य जलालाभप्रकारं दर्शयति—**कूपा** इति। स्वस्य विषयो—देश, 'नीवृज्जनपदो देशविषयौ' इत्यमर। तत्र चलिते सत्पथे 'स्वतिभ्यामेव' इति नियमात् 'न पूजनाद्' इति समासान्तप्रत्ययस्य न निषेध, अपथे—मार्गाद् बहिर्भूते स्थाने, कूपवाप्य सरासि, यावन्ति—यावत्परिमाणानि, एतानि क्वचिद् सन्तु, वारि प्रसृत जल पल्लवम् अल्पजलाशयस्थान वा क्वचिद् भवेत्। तत्सर्वं समुदायविवक्षया चैकवचनम्, नाशयित्वा, अस्माभि-मया भवद्भिश्च। एतेन युष्माभिरपि स्वस्वस्थाने वृक्षजलादिकं नाशयितव्यमिति सूच्यते। स्व—स्वकीयो देश., सर्वत—पूर्णप्रकारेण, मरुधरसदृशो विधेय, इत्यनेनेदं सूच्यते, तत्र क्वचित्पीलवादिफलादिप्राप्तावपि अस्मद्देशे सर्वथा फलादेः प्राप्तिर्न भविष्यति। तदनन्तरं महीध्रात्—महीध्रे स्थित्वा पूर्णतश्च रिपुहननगतिरपि कार्या। एव सति पूर्णतया शत्रुष्वाक्रमणमपि कर्तव्यमित्यर्थ॥ २२॥

अथ फलसिद्धिं प्रदर्शयति—**अन्नेति**। दुर्जना अकबरपक्षपातिनो मानप्रभृतय अन्नपानादीनामसप्राप्ते, अन्नजलालाभात् मा न ज्ञास्यन्ति। कुत्र स्थित प्रताप, तत्सैनिका वा कुत्र सन्ति, तत्प्रजा वा कुत्रास्तीति तेषा ज्ञानमेव न भविष्यति। वयं युगपत् आक्रम्य अद्रिमध्यगान्—पर्वतमध्याया-

अस्यामुपत्यकायां च न कश्चिच्चारयेत्पशून् ।
न गच्छेदिति राजाज्ञा तद्विराद्धुर्वधो भवेत् ॥ २४ ॥

**सर्वे—**साधु साधु शोभनोऽयं प्रकारः ।

( उत्थाय सर्वे स्वस्थान गच्छन्ति )

( विष्कम्भ )

( अर्बुदावलीपर्वतस्योपत्यकामवलोक्य काचिद्भिल्ली स्वस्वामिन पृच्छति । )

**भिल्ली—**णाह ! कहं खु चित्तरहोज्जाणकप्पा इयं उवच्चआ
नाथ ! कथ खलु चैत्ररथोद्यानकल्पा इयमुपत्यका
मरुहरभूमिसरिसी विहिआ ?
मरुधरभूमिसदृशी विहिता ?

**भिल्लः—**माणसीहो णाम राआ सव्वं मेवाडं धंसिउं पडिमुणिय
मानसिंहो नाम राजा सर्व मेवाड ध्वसितु प्रतिज्ञाय
अगबरसमीवम्मि सेणामाणेउं गओ ।
अकबरसमीपे सेनामानेतु गत ।

**भिल्ली—**कम्हा सो रुट्ठो ।
कस्मात्स रुष्ट ।

**भि०—**सो क्खु दक्खिणदेस जइऊण मेवाडाहिवइं पदावं
स खलु दक्षिणदेश जित्वा मेवाडाधिपतिं प्रताप

---

तान्। एतेन तेषा पलायने मार्गस्याभावो बोध्यते । सर्वान् हनिष्याम –नाशयिष्याम । तेषा नाशे सति अस्माक जयो भविष्यतीत्यर्थ ॥ २३ ॥

तदुपत्यकायां शून्यकरणानन्तर तत्र न कश्चिद् गच्छेदिति राजाज्ञा करोति–**अस्यामिति** । अस्यामुपत्यकाया पर्वतासन्नभूमौ 'उपत्यकाद्रेरासन्ना' इत्यमर । कश्चित्पशून्न चारयेत्, पशुचारणे गोमयादिना पुरुषस्थितेर्ज्ञानादाक्रमणमनेन मार्गेण स्यात् । न गच्छेत्–नापि कारणवशतस्तत्र गच्छेत्, इति एषा 'राजाज्ञा' न तु परामर्श । राजाज्ञाया उल्लङ्घने यो दण्डो भवति त बोधयति–तद्विराद्धु –आज्ञाया अवमन्तुः, वधो भवेत्, ममाज्ञोल्लङ्घने वधो दण्डो भविष्यतीत्यर्थ ॥ २४ ॥

विहवं दंसिउं आगओ । पदावेण तेण सह भोअणं ण
विभव दर्शितुमागतः । प्रतापेन तेन सह भोजन न
कअं तओ माणसीहो रुट्ठो ।
कृत ततो मानसिंहो रुष्ट ।

भिल्ली—तेण सह भोअणं कम्हा ण कअं ? दुण्वि सुद्धच्छत्ति-
तेन सह भोजन कस्मान्न कृतम् ? द्वावपि शुद्धक्षत्रि-
अकुलुप्पण्णे चेव ।
यकुलोत्पन्नावेव ।

भि०—एव्वं चेव । परं तस्स पिउणा अप्पपिउदासीपुत्तिआ
एवमेव । पर तस्य पित्रा आत्मपितृदासीपुत्रिका
जउणस्स अगबरस्स दिण्णा, तेण अगवरो माणसींहं
यवनस्य अकबरस्य दत्ता, तेन अकबरो मानसिंह
सेणाहिवइं अकारिसी । सो क्खु माणसीहो बहुओ
सेनाधिपतिमकार्षीत् । स खलु मानसिंहो बहून्
देसाओ जइऊण अगबरस्स देइ।बहूणं रायाणं कण्णगाओ
देशान् जित्वा अकबरस्य ददाति । बहूना राज्ञा कन्यका
अगबरस्स दावेइ । जो क्खु ण देइ, तेण सह जुज्झइ ।
अकबरस्य दापयति । य. खलु न ददाति, तेन सह युध्यते ।
जुज्झिऊणय दावेइ ।
युद्ध्वा दापयति ।

भिल्ली—माणसीहो अणुइयं करेइ, इयं तु जुत्तं, परं तेण सह
मानसिंहो अनुचित करोति, इद तु युक्त, पर तेन सह
भोअणं कम्हा ण कअं । तस्स पिउणा पिउदासीपुत्तिया
भोजन कस्मान्न कृतम् । तस्य पित्रा पितृदासीपुत्रिका
चेव दिस्सा ।
एव दत्ता ।

भिल्ली—दासीकरणगा चेव दिरणा। इअं तु सच्चं, परं सो दासी-
दासीकन्यका एव दत्ता । इद तु सत्यं, पर स दासी-
करणआ दाऊण अप्पणो करणगाओ वि अहिअं
कन्यका दत्त्वा आत्मन कन्यकाया अपि अधिक
ववहरइ। तस्स जउणस्स अणुअरत्तं पिव करेइ ।
व्यवहरति। तस्य यवनस्य अनुचरत्वमिव करोति ।
आरिएहि जुज्झइ, अप्पाणं जउणस्स संबंधिणं
आर्यैर्युध्यते, आत्मानं यवनस्य संबन्धिन
कहेइ, अओ चेव माणसीहेण सह पदावेण भोअणं
कथयति, अत एव मानसिंहेन सह प्रतापेन भोजन
ण कअं ।
न कृतम् ।

भिल्ली—एव्वं खु पदावेण जुत्तं चेव कअं । अम्हे एव्वं
एव खलु प्रतापेन युक्तमिव कृतम् । अहम् एव
मुणे । तुम्हे सव्वे वि पदावस्स साहज्जं करिस्सह ।
जानामि। यूय सर्वेऽपि प्रतापस्य साहाय्य करिष्यथ ।

भि०—अवस्सं ।
अवश्यम् ।

(अत्रान्तरे राजपुरुषा हस्तैर्बध्वा द्वौ पुरुषौ नयन्ति ।)

राजपु०—राअणाओ पावइ अवहेलणफणं सुयं पुरिसो ।
राजाज्ञाया प्राप्नोति अवहेलनफल स्वयं पुरुष ।
पाणदंडो ऽस्स विहिओ पसुचारणकए चेव ॥ २५ ॥
प्राणदण्डोऽस्य विहित॰ पशुचारणकृते एव ॥ २५ ॥

---

अन्ये एवं मा कार्षुरिति राजाज्ञाया अवहेलनफल श्रावयति—**राजाज्ञेति**। पुरुष स्वयमेव अन्यै सह वैराद्यभावेऽपि, राजाज्ञाया अवहेलनफल प्राप्नोति। तत्र राजाज्ञाया अवहेलने स्वल्पफलेऽपि प्राणदण्डो भवतीति दर्शयति । पशुचारणकृते एव-नैतावता राज्ञो हानिर्विहिता, किन्तु आज्ञाभङ्ग एवेति कृत्वा

भि०—एहि अम्हे अस्स सिलाअलस्स भाअम्मि अंतरिए
एहि, आवामस्य शिलातलस्य भागे अन्तरितौ
होऊण चिट्ठामो, जाव इमे गहिऊण एए गच्छंति ।
भूत्वा तिष्ठाव, यावदिमौ गृहीत्वा एते गच्छन्ति ।
(तथा करोति, राजपुरुषास्तौ गृहीत्वा निर्गता ।)

भिल्लः—णिग्गया सव्वे ।
निर्गता सर्वे ।

भिल्ली—दारुणा से आणा ।
दारुणा, तस्य आज्ञा ।

भि०—अम्हे इमाणं गिहं गंतूण पेक्खिस्सामो, इमाणं पुत्ता-
आवामनयोर्गृहं गत्वा प्रेक्षिष्यावहे, एनयो पुत्रा-
ईणं संदेसं कहिस्सामो ।
दिभ्य सदेश कथयिष्याव ।
(अनयोर्गृह गत्वा तथा कुरुत )

भिल्लपुत्रः—आ ! दारुणा से आणा, पिउणो सूलीदंडो
आ ! दारुणा तस्य आज्ञा । पितु शूलीदण्डो
विहिओ । कल्ले भइणीभत्तुणो वि सूलीदंडो
विहित । श्वो भगिनीभर्तुरपि शूलीदण्डो
हविस्सइ ।
भविष्यति ।

(अन्तर्गृहादानीय धनु. शराश्च सज्जीकृत्य प्रतापं हन्तु प्रतिजानीते ।)

भि० पुत्रः—भइणीए वेहव्वाओ पुव्वं चेव पदावं हणिस्से ।
भगिन्या वैधव्यात्पूर्वमेव प्रताप हनिष्यामि ।

भि० भगिनी—भायर ! मा चेव । अम्हाणं सवहो, मा पदावं
भ्रात ! मैव । अस्माक शपथ, मा प्रताप

---

अस्य वृद्धस्य प्राणदण्डो विहित । तस्मात् यूय सर्वथा राजाज्ञा पालयतेति सूचित भवति ॥ २५ ॥

हणह। सो क्खु अम्हाणं अण्णदाओ राआ।
हत। स खलु अस्माकम् अन्नदायको राजा।
सो क्खु ईसरो।
स खलु ईश्वर।
(इति ब्रुवती गृह्णाति)

भि० पुत्रः—मुंचउ अम्हे, पदापं हणिस्से।
मुञ्चतु अस्मान्, प्रताप हनिष्यामि।

भि० भगिनी—कम्हा?
कस्मात्?

भि० पुत्रः—कहं खु तुए ण सुअं?, पिया सूलीकारिओ,
कथ खलु त्वया न श्रुतम्?, पिता शूलीकारित,
तक्कलेअरंपि ण दावेइ। कल्ले तुह भत्तुणो वि
तत्कलेवरमपि न दापयति। श्वस्तव भर्त्तुरपि
सूली हविस्सइ।
शूली भविष्यति।

भि० भगिनी—कम्हा सूलीकारिओ?
कस्मात् शूलीकारिता?

भि०पुत्र—मह पिया णिज्जणं उवच्चयाभाअं दट्ठूण अया-
मम पिता निर्जनमुपत्यकाभाग दृष्ट्वा अजा-
वीओ चारेउं गओ। रण्णाय आणाए अवहेलणकए
वीश्चारयितुं गत। राज्ञा च आज्ञाया अवहेलनकृते
पिउणो सूलीदंडो कारिओ, कल्ले तुह भत्तुणो
पितु शूलीदड कारित, श्वस्तव भर्तुः
सूलीदंडो हविस्सइ।
शूलीदण्डो भविष्यति।

भि० भगिनी—एअं पि अपरिक्खओ पदावो चिट्ठउ।
एवमपि अपरिक्षत. प्रतापस्तिष्ठतु।
(इति पादयो पतति, स चावधूय निष्क्रान्त।)

चारणः—न स्वर्णाभूषणै राजा राजा भवति शक्तिमान् ।
अन्यैरपरिभूताज्ञो राजा लोकैर्निगद्यते ॥ २६ ॥

(इति गायन्निष्क्रान्त ।)

(भिल्लभगिनी उत्थाय स्थिता सती चिन्तयति ।

भि० भगिनी—हा पदावो अपरिक्खयंगो होउ । हे अग्गिदेव!
हा प्रतापोऽपरिक्षताङ्गो भवतु । हे अग्निदेव !
पाणणाहाहिणायअं सअललोअसंथूयमाण-
प्राणनाथाधिनायक सकललोकसस्तूयमान-
किंत्तिमंडलं सुजसत्थोमधउलियदिग्विभाअं
कीर्त्तिमण्डल स्वयश स्तोम धवलितदिग्विभाग
सव्वजणमणोरंजणकरणपक्खाअविहवं सूरिय-
सर्वजनमनोरञ्जनकरणप्रख्यातविभवं सूर्य-
पदावाओ वि अहियअरं सुसोहणं अम्हाणं
प्रतापादपि अधिकतर सुशोभनम् अस्माकं
पदावं अपरिक्खयंगं करेउ । हा ! भाया गओ
प्रतापम् अपरिक्षताङ्ग करोतु । हा ! भ्राता गत ,
पदावं परिक्खयंग करिस्सइ ।
प्रताप परिक्षताङ्ग करिष्यति ।

(इति रुदती सती मूर्च्छति । पुन किञ्चिदुच्छ्वस्य सर्वतो विलोकयति । एकत स्थितौ भिल्ल भिल्ली चावलोक्य तयो पादयो पतति ।)

---

राज्ञो हानिर्नैव जाता, इत्यपराधो नैवास्तीति दण्डोऽनुचित इति प्रजाया प्रवादो न प्रसरेदिति चारणो गायन् राज्ञ औचित्यकारिता श्रावयति—**न स्वर्णै**ति। शक्तिमान्—शक्तिसपन्नो राजा, स्वर्णाभूषणै राजा न भवति-न खलु बहुतरस्वर्णादिभि स राजा भवति । किं तु अन्यैरपरिभूता सर्वथा स्वीकृता आज्ञा यस्य स , एवभूत एव पुरुषो लोकै राजा निगद्यते । एवं च तदाज्ञाया अवहेलने तस्य राजत्वमेवोच्छिद्यत इति तदुच्छेदकस्य प्राणदण्ड उचित एव जात ॥ २६ ॥

**भि० भगिनी—मह लहुभायरं कुदो वि मग्गिऊण आणेउ ।**
मम लघुभ्रातरं कुतोऽपि मार्गयित्वा आनयतु ।
**तुमं चेव ईसरो, तुम्हे अम्हाणं कुलस्स पाण-**
त्वमेव ईश्वर, यूयमस्माकं कुलस्य प्राण-
**रक्खगा ।**
रक्षका. ।

(इति कथयन्ती रुदती सती पुनरमूर्च्छत् । भिल्लस्तन्मूर्च्छानिवृत्तये स्वभार्यां नियोज्य तल्लघुभ्रातुरन्वेषणार्थं गच्छति ।)

**भिल्ली—भइणि ! कहं खु मिया, णहि णहि हियए किंचि**
भगिनि ! कथं खलु मृता, नहि नहि हृदये किञ्चित्
**सासो पडिप्फुडइ । जीवइ ।**
श्वासः परिस्फुरति । जीवति ।

(किंचिज्जलम् अस्या मुखे क्षिपति । मृत्तिकापिण्डमभिषिच्य स्थापयति ।)

**भिल्ली—कहं खु अज्ज वि मुच्छा ण गया, मिया सा, ( क्षणं**
कथं खलु अद्यापि मूर्च्छा न गता, मृता सा,
मुखं निर्वर्ण्य ) **णहि णहि जीवहि एसा, किंचिउ**
नहि नहि जीवति एषा, किंचित्तु
**ऊसासो आगच्छइ ।**
उच्छ्वास आगच्छति ।

(भिल्लस्तस्या लघुभ्रातरमन्विष्यन् चिन्ताकुलमिव एकत्र वृक्षतले स्थितं त विलोकयति ।)

**भिल्ल —तुम्हाणं भइणी तुमे आह्वएइ ।**
युष्माकं भगिनी त्वामाह्वयति ।

**ल० भ्रा० भि०—गिहे अत्थि कुसलं ?**
गृहे अस्ति कुशलम् ?

**भिल्लः—कुसलं चेव । गिहे गंतूण सयं चेव पेक्खिस्ससि ।**
कुशलमेव । गृहं गत्वा स्वयमेव प्रेक्षिष्यसे ।

( उभौ त्वरितमेव गृहमुपस्थितौ। लघुभ्राता मूर्च्छावस्थितां भगिनीं विलोकयति )

ल० भ्राता—कम्हा इयं मुच्छिआ।
कस्मादियं मूर्च्छिता।

भिल्लः—उब्बुद्धा सयं चेव सव्वं कहिस्सइ।
उद्बुद्धा स्वयमेव सर्वं कथयिष्यति।

ल० भ्रा०—भइणि! कहं मुच्छिया।
भगिनि! कथं मूर्च्छिता।

( भगिनी भ्रातुः स्वरसंयोगात्किञ्चिदुच्छ्वस्य )

भि० भगि०—हा कुलदेवआओ! पदावं अपरिक्खयंगं करेह।
हा कुलदेवताः! प्रतापमपरिक्षताङ्गं कुरुथ।

ल० भ्रा०—भइणि! पदावो अपरिक्खयंगो चेव चिट्ठइ।
भगिनि! प्रतापः अपरिक्षताङ्ग एव तिष्ठति।

( भि० भगिनी उद्बुद्धा सती लघुभ्रातरं विलोकयन्ति। )

भि० भगिनी—भाय! अज्ज तुह भाया पदावं मारेउं पडिमुणिय
भ्रातः! अद्य तव भ्राता प्रतापं मारयितुं प्रतिज्ञाय
रायट्ठाणं गओ। पदावं रक्खेह, सो क्खु ईसरो।
राजस्थानं गतः। प्रतापं रक्षयथ, स खलु ईश्वरः।
वेइयमरिआदारक्खणपरो विविहवंजणच्चाय-
वैदिकमर्यादारक्षणपरो विविधव्यञ्जनत्याग-
गहिअमुणिव्वओ अप्पकुलपरंपरागयसौतसमा-
गृहीतमुनिव्रत आत्मकुलपरंपरागतश्रौतस्मा-
रतकम्मकरणनिउणो णिअपयापालणविमुत्त-
र्तकर्मकरणनिपुणो निजप्रजापालनविमुक्त-

---

भ्रात इति। 'अत्र भ्रातः! अद्य तव भ्राता' इत्यारभ्य 'अपरिक्षताङ्गो भवतु' इति पर्यन्तेषु प्रत्येकपदेषु विशिष्टस्वारस्यमस्ति, विस्तरभिया न

सव्वसुहो अम्हाणं राया पदावो अपरिक्खयंगो
सर्वसुख, अस्माक राजा प्रताप अपरिक्षताङ्गो
होउ।
भवतु।

ल० आ० भिल्लः—कम्हा तेण पडिण्णायं?
कस्मात् तेन प्रतिज्ञातम्?

भि० भगिनी—तुह पिउणो रण्णा सूलीदंडो विहिओ।
तव पितु राज्ञा शूलीदण्डो विहित।

ल० आ० भिल्लः—सुयं चेव। मह पिआ तुह भत्ता अ रायाणं
श्रुतमेव। मम पिता तव भर्ता च राज्ञाम्
आणं ओहिलिय अयावीओ चारेउं गया।
आज्ञामवहेल्य अजावीश्चारयितु गता।
तेण तेसिं पाणदंडो विहिओ। णहि क्खु
तेन तेषा प्राणदण्डो विहित। नहि खलु
रण्णा अप्पणो कडे दारुणा आणा किआ।
राज्ञा आत्मनः कृते दारुणा आज्ञा कृता।
किं तु पयाअणरक्खणट्ठं चेव। जओ
किन्तु प्रजाजनरक्षणार्थमेव। यत
सुण्णट्ठाणदंसणेण रिऊणं णाणं चेव ण
शून्यस्थानदर्शनेन रिपूणा ज्ञानमेव न
हविस्सइ। कुत्थ पदावो कुत्थ वा तस्स
भविष्यति। कुत्र प्रताप, कुत्र वा तस्य
पयाअणो, अओ अम्हं मुहम्मदधम्माओ
प्रजाजन, अतोऽस्मान् मुहम्मदधर्माद्
रक्खिउं दारुणा आणा विहिआ।
रक्षितुं दारुणा आज्ञा विहिता।

---

प्रदर्श्यते, विद्वद्भि स्वयमूह्यम्। एवमेव वक्ष्यमाणचन्द्रान्वकारवर्णनेऽप्यव-
गन्तव्यम्।

भि० भगिनी—पदावं रक्ख ।
प्रताप रक्ष ।
ल० आ० भिल्ल —केणोवाएण।
केनोपायेन ।
भि० भगिनी—अम्हे गंतूण पदावस्स सविहे अहवा
वयं गत्वा प्रतापस्य सविधे अथवा
पदावदेवीए सविहे कहिस्सामो- पदावो
प्रतापदेव्या सविधे कथयिष्याम - प्रताप
अज्ज आहेडणत्थं ण गच्छउत्ति अपरिक्खओ
अद्य आखेटनार्थं न गच्छत्विति अपरिक्षतो
होहिस्सइ ।
भविष्यति ।
ल० आ० भिल्लः—कहं अज्ज रत्तिम्मि चेव से सविहे गमिस्सामो
कथमद्यरात्रावेव तस्य सविधे गमिष्याम ।
पभाए तुह भत्तुणो पाणदंडो हविस्सइ ।
प्रभाते तव भर्तुः प्राणदण्डो भविष्यति ।
भि० भगिनी—भत्तुणो पाणदंडो होउ मा वा । पदावो अपरि-
भर्तुः प्राणदण्डो भवतु मा वा । प्रताप अपरि-
क्खअंगो चिट्ठउ ।
क्षताङ्गस्तिष्ठतु ।
आगन्तुकभिल्लः—अम्हे दुव्वे अस्स चोरिस्सामो । तेण
आवां द्वौ अश्वौ चोरयिष्याव । तेन
रत्तिम्मि चेव गमिस्सह ।
रात्रावेव गमिष्यथ ।
ल० आ० भिल्लः—जुत्तं ।
युक्तम् ।

( इति द्वावपि भिल्लौ तथा कुरुत । तौ द्वावश्वौ चोरयित्वानयत ।
ताभ्यां भ्राताभगिन्यौ गच्छत. )

भि० भगिनी—अहो अम्हाणं तुरियगामिणो अस्सा, पभाए
अहो अस्माक त्वरितगामिनोऽश्वा, प्रभाते
चेव गमिस्सामो ।
एव गमिष्याम ।

ल० आ० भिल्ली—उअ, सयलविद्दज्जणसंथूयमाणो सुकि-
पश्य, सकलविद्वज्जनसस्तूयमान स्वकि-
रणसंसोहिअमहेसमत्थओ पच्छिमदि-
रणसशोभितमहेशमस्तको पश्चिमदि-
ग्विभायअत्थमियमयूहमंडलो ओसहीणाहो
ग्विभागास्तमितमयूखमण्डल ओषधीनाथ-
अहोभाए पडइ । अहो दिट्ठिप्पसररोही
अधोभागे पतति । अहो दृष्टिप्रसररोधी
अप्पकरविलिपिअणिहिलजअम्मंडलो मग्ग-
आत्मकरविलिम्पितनिखिलजगन्मण्डलो मार्ग-
परिण्णाणविच्छेअओ अंधयारो सव्वओ
परिज्ञानविच्छेदकोऽन्धकार सर्वत
पसरइ । कहं गच्छम्ह ।
प्रसरति । कथ गच्छेव ।

भि० भगिनी—अस्सा सयं चेव तत्थ चेव गमिस्संति अंध-
अश्वौ स्वयमेव तत्रैव गमिष्यत । अन्ध-
आरे वि ते विलोएंति ।
कारेऽपि ते विलोकयन्ति ।

---

अथ भिल्लो लोके भवितव्यताया वैचित्र्यं प्रदर्शयति—उअ इति । उअ–पश्य । चन्द्र समस्तविद्वद्भि स्तूयमान, नैकेन केनापि विदुषा, एकविद्वद्विधीयमानं भ्रमादज्ञानाद्वा अनुचितमपि स्यात्, तत्रापि विद्वद्भिरिति, न तु मूर्खमण्डलेन, सस्तूयमान –सम्यक्प्रकारेण प्रशस्यमान, तस्यौचित्यकारित्वात् । एवमेव सर्वपदेष्ववगन्तव्यम्, एवंविधोऽपि पुण्यात्मा चन्द्रः

(अथ प्रभाते तत्रैव राजद्वारे तावुपस्थितौ । ज्वराक्रान्ता मूर्छितेव भिल्ली प्रलपति 'पदावं रक्खेह ईसरो स ।' प्रताप आगत्यावलोकयति ।)

**प्रतापः—केयं ? किमियं कथयति ?**

**भिल्ल०—इमाए भाउणा तुम्हं मारेउं पडिण्णाअं ति णिवेउं**
अस्या भ्रात्रा त्वां मारयितुं प्रतिज्ञातमिति निवेदयितुम्
**आगया ।**
आगता ।

**प्रतापः—सौभाग्यवती भव । एवंविधा एव स्त्रियो मम राज्य-श्रियः सन्ति ।**

**भिल्ली—मह भत्तुणो मारेउं पडिण्णाअं कहं सोहग्गवई**
मम भर्तुर्मारयितुं प्रतिज्ञातम्, कथं सौभाग्यवती
**होस्सामि ।**
भविष्यामि ।

**प्रतापः—**

**तव कान्तमथापि यो निहन्यात् प्रथमोऽसौ रिपुरस्तु मे रिपूणाम् ।**
**मयि रक्षति ते प्रियं त्रिलोक्यां नहि कोऽप्यस्ति विरोधने समर्थः २७**

**भि० भगिनी—सो तुह चैव आणाभंगस्स अवराही ।**

( ततः प्रविशति राजपुरुषैर्गृहीतो धनुर्बाणसहितो भिल्लः राजाज्ञावहेलक-स्तस्याः पतिश्च । )

**राजपुरुष०—महाराज ! एष भवन्तं मारयितुं लताविटपान्त-रितो भूत्वा स्थित आसीत्, भवतश्चरैर्दृष्टः । सूच-नानुसारिभिरस्माभिर्गृहीतश्च ।**

---

पतति । सर्वथा दुरात्मा—पापचारी अन्धकारः प्रसरति । इति विधेर्दुर्विल-सितमेवैतत् । एतेन प्रतापस्य कष्टम्, अकबरस्य सौख्यं निन्दितं भवति ।

अथ प्रतापस्तस्याः सौभाग्यवत्त्वे परिपन्थिनमुद्दिश्य कथयति—**तवेति ।** अथापि मया सौभाग्यवतीत्वेन प्रतिपन्नायाः त्वयि यः कोऽपि तव कान्त-पतिं, निहन्यात्—मारयेद् । असौ मे—मम, रिपूणाम्—अकबरमानसिंहादीनां मध्ये

भि० भगिनी—महाराअ ! एसो क्खु मह भाआ, अवरो मे
महाराज ! एष खलु मम भ्राता, अपरो मे
सामी, रक्खेह इमे ।
स्वामी, रक्षयत इमौ ।

प्रतापः—इमौ मुच्येताम् । इयं राज्यलक्ष्मीर्मा वैधव्यं भ्रातृमरणदुःखं वा अनुभवतु ।

( राजपुरुषा किञ्चिद् वक्तुमिच्छन्त स्थिता । )

प्रताप.—नास्मिन्विषये किमपि वक्तव्यम् । एवंविधाया एव राजभक्तप्रजायाः कृते देशरक्षा । अस्याः पितुः शवोऽपि दीयताम् ।

राजपु०—यथाज्ञापयति महाराजः ।

( इति तौ मुञ्चन्ति, शव च ददति । )

( ततो निष्क्रान्ता सर्वे )

इति श्रीमहामहोपाध्यायमथुराप्रसादकृतौ वीरप्रतापनाटके मानपराभवनामकस्तृतीयोऽङ्क ।

---

प्रथमो रिपुरस्तु, सर्वेभ्य पूर्वमसावेव हन्तव्योऽस्तु । ते—तव प्रिय मयि रक्षति सति त्रिलोक्या कोऽपि विरोधने विरोधकरणे तदनिष्टसंपादने समर्थो नास्ति । महाराअ इति 'कगचजतदपयवा प्रायो लुक्' इति जकारलोप । 'अवर्णो यश्रुति' इत्यस्य वैकल्पिकत्वात्क्वचिदकार एव । एवम्—भाया-भाआ, राया-राआ, सोहिअ-सोहिय, अन्धआर अन्धयार, महिअ-महिय इत्यादिष्ववगन्तव्यम् । **किञ्चिद् वक्तुमि**ति । असौ भवन्तमेव मारयितुं प्रच्छन्नस्थितो गृहीत इत्यक्षम्यापराधोऽसौ निहन्तव्य एव । अपरोऽपि भवदाज्ञावहेलक इति कथ मुच्यते एषोऽपि हन्तव्य एव । **नास्मिन्विषय** इति । सर्वं मयाऽवगत्य विचारपूर्वकमेव कृतमिति नात्र कथनस्यावसर ।

इति श्रीमहामहोपाध्यायमथुराप्रसादकृतौ वीरप्रतापनाटके वैजयन्तीटीकाया तृतीयोऽङ्क ।

# चतुर्थोऽङ्कः ।

( तत प्रविशति सिहासनस्थितस्य अकबरस्य सविधे मानसिंह )

**मानसिंहः—विजयताम् ! विजयताम् ! सार्वभौमो महाराजः ।**

**अकबर·—( नि श्वस्य) सेनापते ! यावदयं प्रतापो न नम्रीक्रियते**
**तावन्न मे सौख्यं, नापि सार्वभौमता ।**

**यावत्प्रतापस्तपति प्रचण्डो न शान्तिरागच्छति तावदेव ।**
**त्वयैष शाम्य· शरवर्षणेन सोष्मागमं पक्वफलं नयैनम् ॥ १ ॥**

**मान०—आः ! महानयमभिमानी, न बहुकालं स्थास्यति ।**

**शृणु—मानस्याप्यपमानमेष कुरुतेऽहंमानमूढान्तरो**
**जीवत्येव ततोऽपि मे भुजबलं धिग् लब्धकीर्त्यास्पदम् ।**

---

अथ अकबरसमीपे समागतो मानसिंह सर्वभूम्यधिपतिमकबर मन्यमान कथयति–**विजयतां सार्वभौम** इति । **नि.श्वस्येति**—प्रतापप्रभावत सार्वभौमताया नाशात्सार्वभौमपदश्रवणतो दु खोद्रेकान्नि श्वस्य कथयति–**सेनापते** इति । अजिते प्रतापे न मम सुखं,सार्वभौमता तु स्वत एव नास्ति । तस्मात्किं कर्तव्यमित्याह—**यावदिति** । यावत्प्रचण्डो-महावीरो, दारुणश्च, प्रतापो—मेवाडाधिपति ,ज्येष्ठमासिक सतापश्च, तपति–स्वप्रभावत स्वातन्त्र्येण तिष्ठति, घर्मेण खेद जनयति च । तावदेव–तावत्पर्यन्त, शान्तिर्नैवागच्छति । एष प्रताप त्वया शरवर्षणेन–शराणा बाणाना वर्षणेन, शर इव वर्षणेन वृष्ट्या च, शाम्य -शमनीय , यथा वृष्ट्या ताप शम्यते, एवमेव त्वयैष शमनीय । तथा त्वं सोष्मागमम्-ऊष्मागमेन सहितं, पश्चात्तापेन सोच्छ्वासम्, उष्णयुक्त च । 'उष्ण ऊष्मागमस्तप ' इत्यमर । पक्व—चरमावस्थायि फल दुरदृष्टभोगो यस्य तम्, अन्यत्र परिणतफलमेन प्रताप नय प्रापयेत्यर्थ ॥ १ ॥

अथ मान आ इत्यनेन स्वक्रोध प्रकटयन् कथयति–**महानेति** । महाभिमानत्वान्न बहुकाल स्थास्यति । तदभिमान दर्शयति–**मानस्येति** । अह

भूतेशोऽपि सहायतामथ चरेत्त्रातुं न शक्तः स्वयं
मानस्याप्यपमानिनं क्षितितले नाशात्प्रतापं क्वचित् ॥ २॥

अकबरः०—किं किम्! 'मानस्याप्यपमानमेष कुरुते' किं सत्यमेतत्?

मानः—सत्यमेवैतत्। न श्रुतं, किन्त्वनुभूतमेवैतत्।

अकबरः—आगतं पर्यवसानमस्य। यत्स्वयमेव कुठारेणात्मपादौ छिनत्ति।

मान०—अथ किम्! मुमूर्षोः पिपीलिकायाः पक्षौ समुत्पद्येते।

अक०—सेयं मे निकृतिर्यदेष निहतो मत्तुल्यतामिच्छति
त्वामप्येष तिरस्करोति धिगहो मज्जीवनं निष्फलम्।
किं काश्मीरकलिङ्गवङ्गविजयात्किवाऽपि याम्या जयात्
यावन्नैव जितो भवेदयमरिर्मेवाडदेशाधिराट् ॥ ३ ॥

---

मानेन अहत्वाभिमानेन मूढ कर्तव्याकर्तव्यज्ञानशून्य अन्तरोऽन्तरात्मा यस्य स तथा, एष प्रतापो मानस्यापि, अत्रापिशब्देन स्वस्य सर्वथाऽपमानानर्हत्व द्योत्यते। अपमान कुरुते, ततोऽपि, अपमानकरणानन्तरमपि जीवत्येव, तस्मिन्नेव क्षणे किमसौ न निपातित इति अपि शब्देन एवशब्देन च आश्चर्यद्वारा तन्मारणे विलम्बासहत्व द्योत्यते। यत्तत्क्षणमेवासौ न नाशित, अतो लब्ध कीर्त्यास्पदं कीर्तिप्रतिष्ठा येन तथाभूत मे भुजबलं–बाहुबल धिक्, तन्नाशस्याकरणान्नीचमेव तन्मे भुजबलमित्यर्थ। अथ अत पर स्वय भूतेशोऽपि सकलससारसंहारकर्ता शिवोऽपि सहायता–प्रत्यासत्त्या प्रतापस्य सहायता चरेत्, तर्हि क्वचित्क्षितितले–पृथिवीमण्डले मानस्याप्यपमानिन प्रताप नाशात्त्रातु न शक्त। स्वय शिवोऽपि प्रताप त्रातु न शक्त अन्यस्य कथैव काऽस्तीति स्वगर्वातिशयस्तद्विनाशने स्वनिश्चयश्च सूच्यते ॥२॥

अथाकबर किं किमित्यादिना मानसिंहमुत्तेजयति। पुनरुत्तेजयन्कथयति-सेयमिति। सा इयं परामृष्यमाणा प्रत्यक्षतया मया स्वयमनुभूयमाना च मे मम निकृतिरनादर, यदेष मम सीमासविधे विद्यमानो, निहतो–मृतप्रायो, दरिद्रो मत्तुल्यतामिच्छति, स्वातन्त्र्येणात्मानं ख्यापयति। नैतावतैव शाम्यति

मानः—जित्वैनं भवतः पदे सहसुतं नेष्ये कुटुम्बान्वितं
किं वा व्याकुलितं वनेचरमिव भ्रान्तं विधास्याम्यमुम् ।
यद्वा दीनमिव क्षुधाकुलकुलं दृष्ट्वा गलद्धैर्यकं
ताम्यन्तं चरणे स्वयं निपतितं सन्धौ नियोक्ष्याम्यमुम् ॥४॥

अक०—सर्वं त्वयि संभाव्यते । एवं सति त्वामेवास्य देशस्याधिपतिं करिष्यामि ।

मानः—अस्तु । यथा भवद्भ्यो रोचते । श्रुतमेतन्ममागमनसमनन्तरमेव समस्तमेवाडोर्वरां विध्वस्य कुतोऽपि विनिर्गतः ।

---

किंतु एष त्वामपि तिरस्करोति । अहो इत्याश्चर्ये । निष्फल मज्जीवन धिक् । अत्र तुल्यताया इच्छुकस्य तिरस्कारकर्तुश्चैकत्वप्रतिपत्तये विहितस्य एष इत्यस्य न कथितपदत्वम् । अथ पुनराह–काश्मीरकलिङ्गवङ्गदेशाना विजयात् किम्, न कि चित्तेषा जयात्सिद्धि, अथवा याम्या दक्षिणस्या दिशो जयात्किम्, तज्जयेऽपि न सर्वथाऽभिमतसिद्धिर्जाता । यावदयमरिर्मेवाडदेशाधिराट् प्रतापो जितो न स्यात्तावत्सर्वं व्यर्थमेव । अजिते तस्मिन्न सार्वभौमता नापि सौख्यमिति तदाशय ॥ ३ ॥

अथ मानस्त संतोषयन्प्रतापजयाय प्रतिजानीते–**जित्वेति** । अहं मानसिंह सहसुत–सपुत्र, कुटुम्बान्वितं कलत्रादिसहितमेन प्रताप जित्वा भवत पदे, नेष्ये–प्रापयिष्यामि । अत्र कुटुम्बपदेन सुतस्य ग्रहणेऽपि पुनस्तदुपादानं तद्विरोधे तमपि विजित्य प्रापणद्योतनार्थम् । किं वा इतस्तत परिभ्रमन्तं विधास्यामि । यद्वा–अमु दीनमिव व्याकुलित–व्याकुलचित्त वनेचरमिव-गृहाभावाद् वननिवासिनमिव भ्रान्तमनवस्थितचित्ततया क्षुधयाऽऽकुल–व्याप्त, कुल दृष्ट्वा, गलद्–विशीर्यमाणं धैर्यं यस्य स , तथा ताम्यन्तं व्यर्थमेव मया विरोध कृत इत्यादि पश्चात्ताप कुर्वन्तं, स्वयं कस्यचिदपि प्रेरणाया अभावेऽपि चरणे भवत्पदे निपतितममु सन्धौ–सन्धिकरणे नियोक्ष्यामि । स्वजीवनस्योपायाभावेन अगत्या भवच्चरणे निपत्य स्वयमसौ सन्धिं प्रार्थयिष्यतीति भाव । अत्र द्वितीयादित्रिभिश्चरणै पञ्चमाङ्कगतं वृत्तं

अक०—कातरोऽसौ, भवताऽवश्यमेव विजेतव्यः ।

भवद्भयाद् यो विपिने पलायते
शिलोच्चये वाऽपि निलीयते क्वचित् ।
रणाङ्गणे चापधरस्य कुप्यतः
कथं समक्षं स तवागमिष्यति ॥ ५ ॥

मानः—एवमेवैतत् । भवत्प्रतापस्यैवायं प्रभावः । अहमेनं क्षणादेव ग्रहीष्यामि ।

(मनसि)—कृपाणपाणिं समराङ्गणागतं
विपक्षपक्षक्षयकारकं क्रुधम् ।
नृसिंहशौर्याकृतिधारकं तकं
क एव धर्तुं प्रभवेद्धरातले ॥ ६ ॥

---

बिन्दुरूपेण क्षिप्यते ॥ ४ ॥

अकबर **सर्वं त्वयी**त्यादिना मानसिंहं प्रोत्साहयति ।

पुन प्रतापस्य कातर्यं प्रकटयस्तज्जये सौकर्यातिशय दर्शयति-**भवदि**ति। य प्रतापो भवतो भयाद् विपिने वने पलायते। अथवा क्वचिदपि शिलोच्चये पर्वते विलीयते । निह्नुत्य तत्र तिष्ठतीत्यर्थ. । स प्रताप रणाङ्गणे-रण-चत्वरे, कुप्यत -क्रोध कुर्वत , चापधरस्य—धनुर्धारिणस्तव समक्ष कथमाग-मिष्यति । अत्र पूर्वार्धेन प्रतापस्य कातर्यं निरूप्योत्तरार्धप्रथमपादेन मानस्य निर्भीकता प्रतिपाद्यते, ततश्च प्रतापस्य संग्रामे आगमनाभावश्चतुर्थचरणेन बोध्यते इति प्रतापस्य कातर्यातिशयित्वं व्यज्यते ॥ ५ ॥

अथ अकबरचाटूक्तिभि प्रोत्साहितो मान-**अहमेनं क्षणादेव ग्रहीष्यामी**ति कथयति । **मनसी**ति । वास्तविकतया प्रतापस्वरूपं विचार-यन् मनसि चिन्तयति ।

**कृपाणे**ति । कृपाणं पाणौ यस्य स तथा । शस्त्ररहित कथंचिद् ग्रहीतु शक्यते परं तु कृपाणपाणेस्तस्य ग्रहणमसंभवमेव । समराङ्गणे आगतम्, विपक्षपक्षाणा—शत्रुसहायकाना सैनिकानामित्यर्थ , क्षयस्य—नाशस्य कार-कम् । तथा क्रुधं—क्रोधयुक्तम् । नृसिंहस्य साक्षान्नृसिंहावतारधारिण प्रभो-

(प्रकाशम्) यद्यपि क्षुद्रोऽयं सुखेन जय्यश्च तथापि वनेचर-
सहायकोऽसौ, न जाने कियदस्य बलं भवेदतो महता
बलेन सहाक्रमितव्यम् ।

अक०—अस्य भ्राता शक्तिसिंह एतेन विरुध्य अद्यश्वो मम
शरणमेवायातः ।

यतो वदिष्यत्ययमेव तस्य
छिद्राणि तस्मात्स तवास्ति जय्यः ।
वीरो विभिन्नः स्वयमेव तस्मा-
दसौ परं वैरविधिं विधत्ते ॥ ७॥

मानः—यद्यपि शक्तिरहितः सुजयोऽयं तथाऽप्यस्य जये महान्
यत्नः कर्त्तव्यः ।

अक०—अवश्यमेव महान् यत्न कर्तव्यः, परं कैः साधनैरस्यो-
परि अभियातव्यं, कथं चेत्यादि विचारयितुं सलीम-
सगरशक्तिसिंहप्रभृतय प्रष्टव्याः । मन्ये शक्तिसिंहाद्
बहुतरभेदस्फोटनं भविष्यति ।

---

यच्छौर्यं तस्याकृतेर्धारकम्, नृसिंहवच्छौर्यशोभायमान तक तं प्रतापम् । 'अव्ययसर्वनाम्नाम्–'इत्यकच् । क एव धरातले–पृथ्वीमण्डले धर्तुं प्रभवेत् । अत्रोत्तरोत्तरपदैर्भयातिशयो द्योत्यते ॥ ६ ॥

ततश्च नाहं प्रतापं ग्रहीतुं शक्य इति निश्चित्य प्रकाशरूपेण महता बलेनाक्रमितव्यमिति साहाय्य प्रार्थयते । अकबर प्रतापजये उपायलाभ दर्शयति-**अस्य भ्रात**त्यादि । भ्रातृपदेन सकलतद्रहस्यज्ञातृत्व, विरुध्येत्यनेन तद्दोष-प्रकाशकत्वं, मम शरणमेवेत्यनेन ममानुकूलकारित्वं बोध्यते ।

अथ पुनरकबर कथयति–**यत** इति । अयमेव शक्तिसिंह एव यतो यस्मात्तस्य प्रतापस्य छिद्राणि–अस्मज्जयसाधकदूषणानि वदिष्यति-कथयिष्यति तस्मात्स प्रताप तव–त्वया,'कृत्याना कर्तरि वा'इति षष्ठी । जय्योऽस्ति–जेतुं शक्योऽस्ति।'क्षय्यजय्यौ शक्यार्थे' इत्ययादेश । वीर -शक्तिसिंह , स्वयमेव तस्माद्भिन्न , अस्मत्प्रलोभनादिनिरपेक्षतया तस्मात्पृथग्भूत , परं–घोरं, वैर-विधिं–शत्रुता, विधत्ते । मेवाडध्वंसमसावभिलषतीत्यर्थ ॥ ७ ॥

मानः—युक्तमिदम्, परमहं संभावयामि शक्तिसिंहः प्रतापमवलोक्य भ्रातृस्नेहानुविद्धः स्यात्।

अक०—अधुना भेदस्फोटनं तु करिष्यति, तस्य छिद्राणि कथयिष्यति, प्रतिबन्धं च बोधयिष्यति, येन स सुजयो भविष्यति।

मानः—एवं भवतु, न काचिदनुपपत्तिः।

( ततोऽकबर सर्वान् नायकानाह्वयति। अथ दौवारिकेण सह प्रविशन्ति सर्वे )

अक०—दौवारिक ! त्वं स्वनियोगमशून्यं कुरु।

( इति निष्क्रान्तो दौवारिक )

अक०—शक्तिसिंह ! प्रतापो विजेतव्यः, एष मानस्याप्यपमानं कुरुते।

शक्ति०—मदान्धोऽयम्। स्वकीयानप्यसौ नावलोकयति।

अक०—तर्हि अस्योपरि अभियातव्यम्।

सगरः—केन प्रकारेण, कियता बलेन वेत्यत्र भवद्भिः किं निर्धारितम्?

अक०—शृणु—

वीराः क्षत्रियवंशजाः कलिकलापारंगता मत्प्रिया<br>
गच्छेयुः पदचारिणः कवचिनस्त्रिंशत्सहस्रं रणे।<br>
तेषां चापि पुरःसरं शरशतं दन्तावलानां कुलं<br>
यायात्कुन्तधरा व्रजेयुरयुतं मध्ये तयोः सादिनः॥ ८॥

---

भ्रातृस्नेहानुविद्ध इति। एतेन चतुर्थाङ्कसमाप्तिगत प्रतापशक्तिसिंहयो समेलन बिन्दुरूपेण प्रक्षिप्यते।

अथ अकबर स्वसैनिकाना संख्या तेषा स्थितिं च प्रदर्शयति—**वीरा** इति। क्षत्रियवशजा -परंपरागतशुद्धक्षत्रियवशोत्पन्ना। एतेन तेषामपलायन सूच्यते। कलेर्युद्धस्य कलाया पारगता —युद्धकलाकुशला। एतेन तेषा दक्षत्वं सूच्यते। मत्प्रिया —मम प्रिया, अथवा—अहमेव प्रियो येषा ते। एतेन तेषा मत्पक्षपाततया साभिनिवेशेन युद्धकारित्वं बोध्यते। कवचिन.—परिधृत-

किं च—पार्श्वे षष्टिः सहस्रं यवनबलभुवां सैनिकानामुपेया-
दर्वन्तोऽखर्वगर्वा अरबवनभवाः संचरेयुः सहस्रम् ।
मानः शाहः सलीमः सगरमहवतौ शक्तिसिंहादयस्ते
सर्वे सैन्याधिपत्यं समरसुचतुरा कार्यतः संविदध्युः ९
ग्रहीष्यति प्रतापं यो जीवन्त समरागतम् ।
तं तोषयामि बहुशो दानमानविभूषणैः ॥ १० ॥

---

कवचा , पदचारिण —पदातय , त्रिंशत्सहस्र वीरा , रणे—सग्रामे, गच्छेयु । तेषा वीराणामपि पुर सरमग्रगामि शरशत पञ्चशत दन्तावलाना-हस्तिना, कुल यायात्—गच्छेत् 'दन्ती दन्तावलो हस्ती' इत्यमर । तयोर्हस्तिपदचारिणोर्मध्ये अयुत—दशसहस्रसख्याका , कुन्तधरा कुन्तधारिण , सादिन — अश्वारोहा 'अश्वारोहास्तु सादिन ' इत्यमरः । व्रजेयु —गच्छेयु ॥ ८ ॥

पुनरन्या यवनसैनिकाना संख्या प्रदर्शयति—**पार्श्वे** इति । पार्श्वे— तत्सैन्यस्य उभयपार्श्वभागे, यवनबलभुवा—यवनसैन्यतया गृहीताना, यद्वा- यवनाना बलेन भूरुत्पत्तिर्येषा ते तेषाम् । हठाद् यवनतामापादिताना सैनिकाना षष्टि सहस्रम्, उपेयात् । षष्टिसख्याका यवनसैनिका गच्छन्त्वित्यर्थ । तथा न खर्व —अखर्व ' खर्वो ह्रस्वश्च वामन ' इत्यमर । अखर्वो गर्वो येषां ते तथा । अरबवने भव उत्पत्तिर्येषा ते—अरबदेशीयवनोत्पन्ना । वनोद्भवत्वेन स्वातन्त्र्यात्तेषु पराक्रमातिशयो द्योत्यते। सहस्रं-सहस्रसख्याका अर्वन्त.—अश्वा सचरेयु , सम्यक् यथावस्थितरीत्या गच्छन्तु । समरसुचतुरा.—समरचातुर्ययुक्ता , मानो—मानसिंह , शाह शाहसलीमसगरसिंहमहवतशक्तिसिंहादयस्ते सर्वे, कार्यत -आवश्यककार्यावसरे, सैन्याधिपत्यं— सैन्ये अधिपतित्व, संविदध्यु. सम्यक्प्रकारेण कुर्वन्तु । एतेन सैन्यपलायनावसरे शाहबाजेन कृतोऽकबरागमोद्घोषो बिन्दुरूपेण क्षिप्यते ॥ ९ ॥

अथ प्रतापग्रहणाय प्रलोभनद्वारा सर्वान्सज्जीकरोति—**ग्रहीष्यती**ति । योऽस्मत्सैनिक समरागतं—समरप्राप्त जीवन्त प्रतापं ग्रहीष्यति त दानेन— ग्रामादीना दानेन, मानेन—उच्चासनाभ्युत्थानादिना, विभूषणेन, बहुशो—बहुतरं तोषयामि प्रसादयामीत्यर्थ ॥ १० ॥

सलीम ! त्वां सैन्याधिपत्ये नियोजयिष्यामि । यदि जीवन्नसौ न गृह्णीयात्, तदैनं हत्वा अस्य सुतं निगृह्णीया ।

सलीमः—आः ! कोऽयं वराकः—

लीनः पर्वतकन्दरासु विपिने त्रासान्मदीयादसौ
दैवान्मे समरागतो यदि भवेन्नेत्रातिथिः कुत्रचित् ।
क्षिप्रं तर्हि निपात्य तं भुजबलाद्बद्ध्वा भवत्पादयो-
र्नेष्यामीति समस्तसैन्यपसभासाक्ष्ये प्रतिज्ञायते ॥ ११ ॥

पृथ्वी०—नायं सुजयः, रणविद्याविशारदो महाबलिष्ठश्च सः ।

दंष्ट्रां मत्तमतंगजक्षतभवापानारुणामुद्धतां
जृम्भास्फारितवक्त्रकोणविलसद्विद्युत्प्रभाभासुराम् ।
संध्याकालसमुद्भवच्छशिकलाप्रान्तोन्नता यो हरे-
रुत्खातुं प्रभवेत्प्रतापविजयं धर्तुं स शक्तो भवेत् ॥ १२ ॥

---

अथ सग्रामे तस्मिन् हते सति तत्सुतमेव निगृह्णीया इत्यादिशत्यकबर । अथ सलीम अकिञ्चित्कर प्रताप मत्वा कथयति—**आः कोऽयं वराक** इति।

पुनस्तद्ग्रहणं प्रतिजानीते—**लीन** इति । असौ प्रतापो मदीयात्—मत्संबन्धिन , त्रासाद्—भयात्, पर्वताना कन्दरासु विपिने अरण्ये वा लीन अन्तर्हित यदि दैवाददृष्टवशात समरागत—सग्रामप्राप्त कुत्रचित्सेनासरोहे गजे अश्वे वा कुत्रापि मे मम नेत्रातिथि—दृग्गोचरो भवेत्तर्हि क्षिप्रं त निपात्य भुजबलात्—अन्यनिरपेक्षतया स्वकीयभुजबलेन बद्ध्वा भवत्पादयो-भवच्चरणारविन्दसमीपे नेष्यामि प्रापयिष्यामि इति सैन्यं पान्ति रक्षन्तीति सैन्यपा 'आतोऽनुपसर्गे क' इति कप्रत्यय । समस्ता ये सैन्यपास्तेषा या सभा तस्या साक्ष्ये साक्षिताया मया प्रतिज्ञायते । सर्वसेनापतीन्साक्षीकृत्य तद्ग्रहण प्रतिजाने ॥ ११ ॥

अथ पृथ्वीसिंहस्तत्कथनमसहमान कथयति—**रणविद्येत्यादि** । रण विद्याया विशारद. । तेन त्वया निपातयितु नैव शक्य ,महाबलिष्ठश्च अतो भुजबलेन नैव बद्ध शक्य इति सूच्यते ।

अथ तच्छौर्यभयंकरता प्रदर्शयति—**दंष्ट्रामिति** । मत्तो यो मतगजो-हस्ती तस्य क्षतभवस्य-रुधिरस्य आपानेन-ईषत्पानेन , अरुणाम् ,

कः कोपोत्कटशक्रचापसदृशभ्रूभङ्गभीमाननं
चञ्चच्चारुकृपाणकृत्तपृतनासृग्बिन्दुकिर्मीरितम् ।
विद्युत्कान्तिसदृक्समस्तसमरे चंचूर्यमाणं भृशं
भीष्मं भीमसमं प्रतापविजयं धर्तुं समर्थो भवेत् ॥ १३ ॥

मानः—संभाव्यते अस्ति प्रतापो वीरः । परमिह तु महावीरा एव सन्ति ।

पृथ्वी०--अलमुक्तिप्रत्युक्त्या । युवयोः समरभूमिरेव निर्णायिका भविष्यति ।

शक्ति०—युक्तम् । तदेव निर्णयस्थानम् ।

अक०—शक्तिसिंह ! कथय प्रतापसविधे कियती सेना, कीदृशी च वर्तते ।

---

उद्धताम्-दृढोन्नताम्, जृम्भया आस्फारित-प्रसारित यद्वक्त्र-मुख, तस्य कोणे-प्रान्तभागे विद्युत्प्रभाभासुराम् विद्युदिव देदीप्यमानाम्, सध्याकाले-सायंकाले, समुद्भवन्ती या शशिकला-चन्द्रकला तस्या प्रान्त इव उन्नता हरे-सिंहस्य दंष्ट्रा य उत्खातु प्रभवेत्प्रतापविजयं स धर्तुं शक्त-समर्थ भवेत् । एतेन यथा हरेर्दंष्ट्रा उत्खातुं नैव शक्या एव प्रतापविजयोऽपि ग्रहीतु नैव शक्य इति सूचित भवति ॥ १२ ॥

कःकोपोत्कटेति । को नाम त्रिभुवनमध्येऽस्ति यो कोपेन उत्कट शक्रचापसदृशो यो भ्रूभङ्ग -भ्रुकुटिभङ्ग तेन भीमं—भयकरम् आननं-मुख यस्य स तम्, तथा चञ्चत्-चञ्चलश्चारुर्मनोहरो य. कृपाण -खड्गस्तेन कृत्ता-छिन्ना या पृतना-विपक्षिसेना, तस्या असृग्बिन्दुभि रुधिरबिन्दुभि , किर्मीरित-चित्रवर्णयुक्तम् । तथा विद्युत्कान्तिरिव समस्तसमरे पश्चिमोत्तरादिभागावस्थितसकलसेनाया भृशमत्यन्त चञ्चूर्यमाण—कौटिल्येन व्रजन्तं भीष्मं-भयकर, यद्वा—स्वप्रतिज्ञापालने साक्षाद् भीष्मस्वरूप भीमसमं भीमवन्महाबलशालिन प्रतापविजय धर्तुं ग्रहीतुं समर्थो भवेत् , न कोऽपीत्यर्थ । अत्र पूर्वपदेन भयकररूपवत्त्व, द्वितीयपदेन शत्रुनाशादिशौर्यकार्यकारित्वं तृतीयपदेन सर्वव्यापकतया त्रासकारित्व महापराक्रमशालितया आशु वैरि-

शक्ति०—अयुतं क्षत्रियास्तत्र खड्गयुद्धविशारदाः ।
बाणविद्यासु निपुणा भिल्लमीणादयः परे ॥ १४ ॥
स्वल्पा एव पर्वतारोहिणो धानुष्का एते असंख्यमपि ते सैन्यं समूलं नाशयिष्यन्ति । अत —
शतघ्न्यो दशसंख्याः स्युस्तुपका द्वे सहस्रके ।
एवं सैन्यसमारोहे जयोऽस्माकं भविष्यति ॥ १५ ॥

पृथिवीसिंहः—( मनसि ) आः ! किमिति भेदस्फोटनं कृतम् ।

अकबरः—साधु शक्तिसिंह ! साधु । प्रतापं विजित्य त्वामेव मेवाडदेशाधिपतिं करिष्यामि । त्वया सम्यग्मार्ग आदिष्टः । मानसिंह ! त्वयाऽपि सर्वसैन्यसमारोहेण सहाभिगन्तव्यम् । अहमपि अजमेरस्थितो भूत्वा सर्वं यथावसरं संपादयिष्यामि ।

( इति सर्वे युद्धोद्युक्ता निर्गच्छन्ति । ) पटाक्षेप ।

---

विनाशकारित्व च चतुर्थपदेन महाबलिष्ठत्व स्वप्रतिज्ञानिर्वाहकत्वं च बोध्यते । एतेन घोरसकटदशायामपि न स्वातन्त्र्य त्यक्ष्यति विजय च प्राप्स्यतीति बिन्दुरूपेणोपक्षिप्त भवति ॥ १३ ॥

अथ शक्तिसिंह प्रतापस्य सैन्यसख्या दर्शयति—**अयुतमिति** । तत्र प्रताप-सेनाया खड्गयुद्धे विशारदा -प्रगल्भा , अयुत-दशसहस्रसख्याका क्षत्रिया- । परे-तदतिरिक्ता , बाणविद्यासु निपुणा शिक्षिता भिल्लमीणादय-—भिल्लमीणादिजात्युद्भवा सन्ति ॥ १४ ॥

**स्वल्पा** इति । पर्वतारोहित्वात् धानुष्कत्वाच्च दूरत एव स्वल्पा अप्येते ते सैन्य नाशयिष्यन्ति, तेषा नाशोपायस्य तत्र भवत्सविधेऽभावात् । अथ तन्नाशनोपायं बोधयति । अत -अस्मात्कारणात्तेषा पर्वतारोहित्वेन दूरत एव युद्धकारित्वात् भवदुक्तसेनासरोहादिदमधिकमस्तु ।

तदेव बोधयति—**शतघ्न्य** इति । शतमपि घ्नन्तीति शतघ्न्य 'तोप' इति लोके प्रसिद्धम् । ता दशसंख्याका स्यु । एवं तुपकऋषिप्रणीतत्वात्तुपका 'बन्दूक' इति लोके प्रसिद्धम्, द्विसहस्रके-द्विसहस्रसंख्याका भवन्तु । एवं

( इतोऽधित्यकाया स्थित प्रताप स्वसामन्तादिभि परामृशति । )

( तत प्रविशति आगरात समायातश्चार । )

चारः—जयतु जयतु महाराजः ।

प्रतापः—कथय यवनाधिराजवृत्तान्तम् ।

चारः—स खलूद्विग्नोऽपि स्वनीतिनैपुण्येनात्मानमनुद्विग्नमिव प्रकाशयति ।

स चाद्यश्व—

नो धत्ते नृत्यवार्ता क्वचिदपि च गतो नैव गानं विधत्ते
ध्यानं वा नैव चित्ते वहति कुहचिदुद्भ्रान्तचित्तो विषण्ण. ।
त्वच्छौर्याद् भीतभीतो रणमरणभयात्त्रस्यमानः समन्ताद्
मानस्यैवापमानं वदति मुहुरहो म्लेच्छराजः सभायाम् १६

प्रता०—कपटकलाकुलीनो धूर्तोऽसौ ।

---

सैन्यसमारोहे—सुसज्जितसैन्ययात्रायामस्माक जयो भविष्यति । यद्येव न करोषि तदा जयो नैव भविष्यतीति तदाशय ॥ १५ ॥

अथ आगरात समायातश्चार अकबरवृत्तान्त दर्शयन् अद्यश्व अकबर किं करोतीति कथयति—**नो धत्ते** । नृत्यवार्ता नृत्यस्य वार्तामपि नो धत्ते नैव करोति । क्वचिदपि च गत विवाहादिमहोत्सवादिषु प्राप्तो गानं नैव विधत्ते । प्रायो गानविद्याकुशला आपाततो गायन्ति, परमय महोत्सवादिगतोऽपि गानं नैव करोति । एतेन त्रासो विचारातिशयश्च द्योत्यते । अथ वा उद्भ्रान्त चित्त यस्य स तथा विभ्रान्तमना विषण्ण —विषादयुक्त कुहचिद्-कुत्रापि एकान्ते ध्यानागारे ईश्वरवन्दनासमये वा चित्ते ध्यान नैव वहति, क्षणमात्रमपि नैव करोति । त्वच्छौर्यात् भीतभीत -अत्यन्तभययुक्त , रणे-सग्रामे मरणभयात्समन्तात्सर्वतोभावेन त्रस्यमानो म्लेच्छराज सभाया मुहुर्वार वार मानस्यैव अपमान वदति । अहो इत्याश्चर्ये । तथाभूतसेनायुक्तोऽपि एव भवद्भ्यो बिभेतीत्याश्चर्यम् । यद्वा—मुहुर्मानस्यैवापमान वदति, येन मानपक्षपातिन क्रुद्धा सन्नद्धास्सन्तोऽधिरोहन्तु इति कौटिल्यमस्याश्चर्यकारकम् ॥ १६ ॥

अस्य भेदनीते कौटिल्यमवगत्य प्रताप कथयति—**कपटकले**त्यादि ।

चारः—अथैकदा तेन सलीममानसिंहसगरादिप्रधानभटा-
नाहूय जीवन्तं भवन्तं ग्रहीतुं बहुतरं प्रलोभनमदायि।
परं तु सर्वे तच्छ्रुत्वा मौनमेवावस्थिता.। किन्तु सलीम-
मानसिंहौ स्वौद्धत्यं प्रकटयन्तौ भवद्भूमिलिप्सया
भवन्तं ग्रहीतुं प्रतिजानाते स्म।

प्रता०—आः! कोऽयं स्वाभिमानशून्यो मान.।

विक्रीय गौरवमणिं मरणस्य भीत्या
यो म्लेच्छराजमनुगच्छति सेवमानः।
सोऽयं क्षितिं समभिकाङ्क्षति यत्तदेनं
युद्धे क्षितिं स्वभुजदण्डबलेन नेष्ये॥ १७॥

सालुम्बः—( किञ्चिद्विहस्य ) वकोऽपि हंसगतिमृच्छति। यदयं
सलीमोऽपि भवता सह योद्धुमभिकाङ्क्षति।

दृष्ट्वा भूलिखितान् रणाङ्गणगतान् निस्त्रिंशयुक्तान्भटान्
कृत्वा तेषु पदं स्वकीयविजयं जानाति यो मूढधी.।

---

पुनश्चार कथयति—क्षितिलिप्सया मानस्त्वा ग्रहीतु प्रतिजानीते इति, माननामश्रवणमात्रत कुप्यन्प्रताप कथयति—**आ** इति। आ इत्युपेक्षायाम्, स्वाभिमाने–क्षत्रियत्वार्यत्वाद्यभिमानेन शून्य कोऽय मान अय तु सर्वथा उपेक्षणीय एव अकिंचित्करश्च।

**विक्रीयेति**। यो मान मरणस्य भीत्या–अकबरविरोधे सग्राममरण-भयात् गौरवमणिं–स्वकीयक्षत्रियत्वार्यत्वादिगौरवरूप मणिं विक्रीय अक-बरस्यैव सविधे इत्यर्थ, म्लेच्छराज–म्लेच्छाधिपतिं सेवमान सन् अनु-गच्छति–अनुसरति, म्लेच्छराजत्वेन नीचाधिपतित्वं तस्य सूच्यते। ततश्च तत्सेवनं तदनुसरण च महदनुचितमिति मानस्य कातर्येण अनौचित्यकारित्वं द्योतयति। स अय मानो यद्यस्मात्कारणात्क्षितिं- पृथिवीं समभिकाङ्क्षति तत्तस्मात्कारणादेन मानसिंह युद्धे स्वभुजदण्डबलेन–स्वकीयबाहुबलेन क्षितिं नाश नेष्ये, क्षितिमभिकाङ्क्षतेऽस्मै स्वभुजदण्डेन क्षितिं दास्यामि॥ १७॥

मातुः पातु पयः पयोधरगत युद्धे स नैव व्रजेद्
वीराणामवनिर्यतो निगदिता सा युद्धभूमिर्बुधैः ॥ १८ ॥

प्रता०—ततस्ततः—

चार —तदनन्तरं भवतो यथावस्थितं शौर्यं निरूप्य पृथ्वीसिंहेनोक्तम्। नायं ग्रहीतुं शक्य । युवयो. शौर्यस्य संग्रामभूमिरेव निर्णायिका भविष्यति ।

प्रता०—साधु साधु ! पृथ्वीसिंहेन युक्तमेवोक्तम्। ततस्तत —

चारः—तदनन्तरं लक्षादप्यधिकसुभटसंयुतं हस्त्यश्वशतघ्न्यादिसहितं तत्सैन्यं प्रचलितम्।

प्रता०—कस्तत्र सेनापतिः ?

चारः—सलीमः।

प्रता०—बालोऽसौ कथं सेनापतिः कृतः ?

चार०—नाममात्रतोऽसौ सेनापतिः।

प्रता०—तर्हि मानसिंहः कः ?

चारः—मानसिंहः सर्वस्वमेव । स तु सेनायाः सेनापतेश्च संरक्षकः। एतदभियानस्य मानसिंह एव कारणम्।

प्रता०—इदं तु विदितमेव, परं कथमसौ बालस्याधिपत्यं स्वीकरोति ? सर्वमपि क्षत्रियवंशगौरवमनेन परित्यक्तम्। अस्तु, अथ यवनाधिपतिः कुत्राधिवसति ?

---

सालुम्ब. सहास सलीमस्य बालकालिक कृ य दर्शयन् कथयति-हृष्ट्वेति। यो मूढधीर्मूढबुद्धि रणाङ्गणगतान्-रणाङ्गणगामित्वेन दर्शितान् निस्त्रिंशयुक्तान्-खड्गसहितान्भूलिखितान् चित्रतया भूमौ निर्मितान् भटान् दृष्ट्वा तेषु भूनिर्मितभटेषु पद कृत्वा स्वकीयविजय जानाति-अहमेतान् जितवानिति मन्यते। स मातु -स्वकीयमातु पयोधरगत-स्तनगत पय -दुग्ध पातु-रक्षतु । स्वकीयलघुभ्रातु सकाशान्मातृस्तनदुग्ध रक्षतु युद्धे नैव व्रजेत्, यत बुधैर्विद्वद्भि सा युद्धभूमि वीराणामवनिर्निगदिता, वीरभूमिरेव सा प्रोच्यते, न तु तथाविधकातराणामागमनभूमिरिति भाव ॥ १८ ॥

चारः—सोऽपि द्वितीयामभिनवसेनामादाय इतः कियद्दूरे अजमेरपत्तने स्थितः । तदागमनानन्तरमेवाहमिहायातः । मन्ये पञ्चषैरेव दिनैः प्रथमं तत्सैन्यमिहागमिष्यति । अत. परं भवन्त. प्रमाणम् ।

( अथ प्रतापसहायका रणोद्भटा भटा गर्जन्ति । अहपूर्विकया स्वस्वकरवालमादाय क्ष्वेडयन्ति । )

अहंपूर्विकया सर्वे सोत्साहा विक्रमोद्भटाः ।
शैलस्थिताः प्रतीक्षन्ते शत्रोरागमनं मुहुः ॥ १६ ॥

प्रता०—सेनापते ! अत्रेदं युज्यते, वयं सर्वे सैनिका कोमलमीरपर्वतस्याधित्यकाया स्थिताः सन्तः शत्रोरागमनं प्रतीक्षेमहि । इह हि शत्रोराक्रमणं सहसा नैव संभाव्यते ।

यतः—अन्तः प्रवेष्टुं सरणिर्लघिष्ठा
यया चरन्तोऽरिभटाः क्रमेण ।
महोपलानामतिवर्षणेन
शरव्रजैर्नाशयितुं च शक्या ॥ २० ॥

---

अकबरसैन्यागमनश्रवणसमनन्तरमेव प्रतापभटाना कृत्य दर्शयति—**अहमिति** । विक्रमेण—पराक्रमेण उद्भटा -महापराक्रमशालिन. सोत्साहा —परमोत्साहयुक्ता सर्वे पत्त्यश्ववारधानुष्कादय अहपूर्विकया पूर्वमहगमिष्यामि, नहि नहि त्व तिष्ठ पूर्वमहमाक्रमिष्यामि इत्यहपूर्विकया 'अहपूर्वमहपूर्वमित्यहपूर्विका स्त्रियाम्'इत्यमर । मुहुर्वार वार शत्रोरागमनं प्रतीक्षन्ते ॥ १६ ॥

अथ प्रतापो हल्दीघाटीतटमभिलक्ष्य सेनापतिं कथयति, इह हि शत्रोराक्रमण नैव सभाव्यते। तदेव दर्शयति—**अन्त** इति । अन्त प्रवेष्टुम् अत्रान्तरागन्तुं सरणि -पद्धतिर्लघिष्ठा-अतिस्वल्पा, यया सरण्या चरन्तो गच्छन्तोऽरिभटा क्रमेण आगमनक्रमेण महोपलाना बृहत्पाषाणानामतिवर्षणेन तेषामुपरि सहसा अविरतनिपातनेन शरव्रजैर्बाणसमूहै सर्वेषा धानुष्काणा सामूहिकतया बाणनिपातनेन नाशयितु शक्या । एव प्रकारेण सर्वे घातिता भविष्यन्तीति भाव ॥ २० ॥

सर्वे—सुयोग्यमिदं स्थानमस्मद्रणभूमेः ।

( इति हल्दीघाटीतटे गन्तु सर्वे परिक्रामन्ति । )

( इतोऽजमेरपत्तने स्थित समरवृत्तान्तपरिज्ञानाय समुद्विग्नमना अकबरश्चिन्तयति । )

अक०—कथमद्यापि समरभूमेर्न कोऽपि समायातः। आः! तत्र किमासीत्—

मानोऽनेन निपातितः किमभवत्किं वा सलीमो हतो
दुर्धीरस्य जये कथं सुतमहं सैन्याधिपत्ये व्यधाम् ।
हा शम्भो ! स परावृत्तो यदि भवेद् दिष्ट्या रणादक्षतः
सत्यं तर्हि शपामि नैव समरे तं प्रेषयिष्ये पुन. ॥ २१ ॥

कथं विभ्रान्तमनसा नियुक्तः स्वसुतो मया ।
हनने ग्रहणे तस्य बिडालस्य यथोन्दुरुः ॥ २२ ॥

---

अथाकबर 'स्नेह खलु पापशङ्की'ति समरवृत्तान्तस्यापरिज्ञानान्मानसलीमयोरनिष्टमुद्भावयन्स्तर्कयति—**मानः** इति । अतिभयात् म्रियमाण प्रताप प्रत्यक्षमिव मन्यमान इद शब्देन कथयति। अनेन प्रतापेन किं मानो निपातितो मारितोऽभवत्, किं वा सलीमो हत दुष्टा धीर्यस्य स , दुर्बुद्धिरहम् अस्य प्रतापस्य, यद्वा–दुर्धीरस्य प्रतापस्य जये सुत सलीम सैन्याधिपत्ये कथ व्यधाम् । सैन्याधिपतौ हते सति सर्वे स्वयमेव हता भवन्तीति सैन्यपतिमेव प्रथमं सर्वे हिंसन्तीति तदुत्ताप । हा इति खेदे, हे शम्भो ! कल्याणकारिन् ! परमेश्वर ! यदि स मम सुत दिष्ट्या-ममैव शुभप्रारब्धोदयाद् रणात्सग्रामाद् अक्षत –व्रणरहित परावृत्तो भवेत्,तर्हि सत्य शपामि–सत्य यथा स्यात्तथा शपथ करोमि, यद्वा-सत्यमेव शपामि सत्यस्यैव शपथ करोमि, पुन अत पर कदाचिदपि तं सुत समरे सग्रामे नैव प्रेषयिष्ये ॥ २१ ॥

पुनरुद्विग्न सन् कथयति—**कथमिति** । विभ्रान्त मनो यस्य स , तेन ज्ञानशून्येन मया बिडालस्य उन्दुरुर्यथा, बिडालस्य हनने ग्रहणे मूषक इव तस्य प्रतापस्य हनने ग्रहणे स्वसुत कथ नियुक्त । प्रतापस्य बिडालसदृशतया स्वसुतस्य मूषकतुल्यत्वेन कथनात्प्रतापसमक्ष गमनानन्तरमेव स हतो भविष्यतीति चिन्तातिशयो द्योत्यते॥ २२ ॥

( तत प्रविशति दौवारिक । )

दौवा०—जेदु जेदु महाराओ।

जयतु जयतु महाराज ।

( अकबरोऽन्यमनस्कतया विलोकयन्नेव स्थित । )

दौवा०—महाराअ ! समरभूमिओ जुज्झवुत्तंतवाहओ दुआरि

महाराज ! समरभूम्या युद्धवृत्तान्तवाहको द्वारि

चिट्ठइ।

तिष्ठति।

अक०—प्रवेशय।

( तत प्रविशति दौवारिकेण सह चर । )

चर —( सहसोपसृत्य ) जयतु जयतु महाराजः !

अक०—कथय, सलीमोऽपरिक्षतस्तिष्ठति ?

चरः—भवतां पुण्यकर्मप्रभावतोऽपरिक्षत एवासीत्।

अक०—सैन्यगमनमारभ्य नि.शेषं वृत्तान्तं कथय।

चरः—सलीमसैन्याधिपत्ये प्रचलितं त्वदीयं सैन्यं कोमलमीर पर्वतोपत्यकामधिजगाम । तत्र स्थित्वा शत्रोरासार प्रसारावरौत्सीत्।

अक०—ततस्ततः—

चरः—तदनन्तरं शत्रवो रात्रौ कदाचिदेवाक्रम्य बहून्सैनिकान् हत्वा खाद्यसामग्री विलुण्ठ्य न जाने केन मार्गेण पलायन्त। तदनन्तरमुदयपुरं गन्तुं संकीर्णेन पर्वतमार्गेण प्रथमं कतिचित्सैनिका अन्तः प्रविष्टा, परं न ते परावृत्ताः, किन्तु तत्रैवावरुध्य सर्वेऽपि विनाशिताः।

अक०—ततस्ततः—

---

**अन्यमनस्कतयेति** । स्वसुतस्यानिष्टसभावनया शोकाकुलतया चिन्तनादन्यमनस्कता। **अपरिक्षत** इति । सकलवृत्तान्तत पूर्वं सलीमस्य कल्याण पृच्छति। न परिक्षत -अपरिक्षत ।सलीमो व्रणितस्तु न जात इत्यर्थः।

चरः--तदनन्तरं पुनरपि अन्ये प्रेषिताः, तेऽपि तथैवावरुध्य विनाशिताः । यदा नैकोऽपि तेभ्यः परावृत्तस्तदा सर्वेऽपि ससैनिका मानप्रभृतयस्तदन्तः प्रविष्टाः। ते यथाकथंचित्संकीर्णमार्गान्निःसृत्य हल्दीघाटीचत्वरे उपागता आसन्।

अक०—ततस्तत —

चरः—ततः प्रतापाज्ञासमनन्तरमेव—

मन्नासालुम्बकाद्याः समरसुचतुरा लब्धभूरिप्रतिष्ठा
युद्धोद्युक्ताः ससैन्या अहमहमिकया क्ष्वेडयन्तः समन्तात्।
युष्मत्सैन्यं गलीतुं क्षणमपि बहुशो मन्यमानाः समस्ताः
स्वं खड्गं भ्रामयन्तो विपुलतरभटां वाहिनी ते निजघ्नुः॥२३॥

इति सहसैव तैस्ते बहुतरा सेना विनाशिता ।

पर्वतप्रान्ताच्च—

बाणा. पन्नगभाः फणाकृतियुताः फुंकारशब्दाकुलाः
कायस्पर्शनमात्रजीवहरणप्राप्तप्रतिष्ठा दृढाः ।

---

अथ चर प्रतापाज्ञासमनन्तर तत्सैनिकाना कार्यं दर्शयति—**मन्नेति** । समरेषु सुचतुरा –सग्रामकलाज्ञातार , लब्धा भूरि प्रतिष्ठा यैस्ते-विजितविविधसग्रामा , युद्धोद्युक्ता –युद्धसनद्धा ससैन्या –स्वस्वसेनासहिता । एतेन तेषा सामन्तत्व सूच्यते । अहमहमिकया समन्तात्क्ष्वेडयन्त , अहमेव पूर्वं गमिष्यामि अहमेव पूर्वं गमिष्यामि इत्यादिवचनै सर्वतो गर्जन्त युष्मत्सैन्य गलीतु—युष्मत्सेनाया निगरण कर्तुं, क्षणमपि बहुशो मन्यमाना – क्षणमात्रमपि विलम्बमसहमाना समस्ता सर्वेऽपि मन्नासालुम्बकाद्या –मन्नासालुम्बादिनामान , स्व खड्ग भ्रामयन्त सन्त , विपुलतरा भटा यस्या सा तथाभूता ते तव वाहिनीं–सेना निजघ्नु –निहतवन्त । विपुलतरभटत्वेन शौर्यशालिनीत्व तस्या सूच्यते, तद्धनने च प्रतापसैनिकानामतिशौर्यशालित्व व्यज्यते ॥ २३ ॥

अथ बाणवर्णनमाह—**बाणा** इति । ततस्तदनन्तर पन्नगाः–सर्पास्तद्वत्

जिह्वामुक्तविषा महाभयकराः दीर्घा मरुद्गामिनः
क्षिप्रं त्वत्सुभटान् रणाङ्गणगताञ्जघ्नुः सहस्रं ततः ॥ २४ ॥

अक०—ततस्ततः—

चरः—ततो बाणनिपतनसमनन्तरमेव सेनापतेराज्ञया त्वदीय-सेनातश्च

आसन्कल्पमहामहाघनघटाघोरायमाणस्वना
निर्मर्यादसमुद्रभीमनिनदप्रोत्तुङ्गधांकारिकाः ।
द्यावाभूमितमिस्रनीलवसनप्रस्तारिका विश्वतो
वर्षन्त्यो गुलिकास्ततः प्रचलिताः सर्वाः शतघ्न्यः पराः॥२५॥

---

भा कान्तिर्येषां ते, कृष्णवर्णा सर्पा विषधरा भवन्ति, लौहनिर्मितत्वात् बाणा अपि श्यामवर्णा भवन्ति । तथा फणाकृतियुता—फणाकारयुक्ता क्षुराकारचन्द्राकाराणा बाणाना तथात्वात् । फुत्कारशब्देन आकुला व्याप्ता पत्त्रयुक्तत्वेन फुत्कारशब्दयुक्ता, तथा कायस्पर्शनमात्रेण जीवहरणे मारणे प्राप्ता प्रतिष्ठा यैस्ते, तथा महाविषधरत्वात्, महाविषे विध्मापितत्वाच्च । दृढा युवावस्थामापन्ना उत्तमधानुष्कप्रेरितत्वात्कार्यकरणसमर्था । जिह्वया मुक्तं विषं यैस्ते, सर्पस्वभाव एवैष यज्जिह्वया विषं त्यजति, अन्यत्र—जिह्वया अग्रभागेन मुक्तं विषं यैस्ते तथा महाभयकरा—अत्यन्तभयावहा, दीर्घा—दीर्घाकारा । मरुदिव गन्तुं शीलं येषां ते तथा शीघ्रगामिनः बाणा रणाङ्गणगतान्—संग्रामचत्वरप्राप्तान्सहस्रं त्वत्सुभटान्—त्वदीयोत्तमभटान् जघ्नुः—हतवन्तः । अत्र विषधरसर्पैः सह बाणानां साधारणधर्मत्वप्रतिपादनाद् यथा विषधरसर्पदष्टा जीवा हता एव भवन्ति, एवं बाणनिहतास्त्वदीयभटा मृता एव अभवन्निति व्यज्यते ॥ २४ ॥

अथ त्वदीयसेनापतेराज्ञया प्रचलिता शतघ्नीः प्रदर्शयति—**आसन्नि-ति** । ततस्तदनन्तरं कल्पे—प्रलयसमये या महामहाघनघटा—अतिमहामेघ-घटास्तद्वद् घोरायमाणः स्वनो यासां तास्तथा निर्मर्यादो—मर्यादारहितो यः समुद्रस्तस्य भीमनिनदस्तद्वत्प्रोत्तुङ्गधाकारिका तत्सदृशमतिसमुन्नतं धाम् इति शब्दं कुर्वत्यः, द्यावाभूम्योर्मध्ये अन्तराले तमिस्रमेव नीलवसनं तस्य

अक०—ततस्ततः—

चर—ततः क्षणमात्रेण उभयतः सेनायां बहवो भटा निपतिता आसन् । एतदवलोक्य प्रतापः क्रोधारक्तनयनस्त्वत्सैन्ये प्रविवेश । तत्र—

हस्ते खड्गं दधानश्चरति किमु यमो वीरसंघं विचिन्वन्
मृत्युर्वा कायधारी गिलति तव भटान् यं विलोक्यान्वमंस्त ।
सैन्यं ते दारयन्सोऽविशदथ सघनव्यूहमध्ये प्रतापो
गच्छंश्चिच्छेद सर्वं कृषक इव महावीरसंघं क्षणेन ॥ २६ ॥

खड्गाखड्गि ततश्चासीदुभयोः सैन्ययोर्महत् ।
कुन्ताकुन्त्यश्ववारेषु दारुणं सांपरायिकम् ॥ २७ ॥

अक०—ततस्ततः—

---

प्रस्तारिका । अतिशयितधूमप्रसरेण नीलवसनस्य प्रस्तारणमारोप्यते । विश्वतः सर्वतो गुलिका वर्षन्त्यः—अविरलभावेन अनारतं क्षिपन्त्यः, पराः—उत्कृष्टाः, सर्वाः शतघ्न्यः प्रचलिता आसन् । युगपत्सर्वशतघ्नीनां प्रचलनाद्बहवः प्रतापसैनिका निपतिता मृताश्चासन्नित्यर्थः ॥ २५ ॥

यदा उभयसेनाया बहवो भटा निपतिता आसंस्तदा क्रुद्धः प्रतापस्त्वत्सेनायां प्रविवेश इति तत्कृत्यं दर्शयति—**हस्ते** इति । हस्ते खड्गं दधानो वीरसंघं विचिन्वन् वीरसमुदायमेव मारयन् यमो यमराजः किमु चरति । वा—अथवा, कायधारी गृहीतशरीरो मृत्युस्तव भटान् गिरति, तव भटानां निगरणं करोति । क्षणमात्रतस्तव भटानां मरणेन तत्रादर्शनान्निगरणं संभाव्यते इति यं प्रतापं विलोक्य लोकोऽन्वमंस्त अनुमिनोति स्म । अथ स प्रतापस्ते सैन्यं दारयन्सन् सघनव्यूहमध्ये सान्द्रसेनासंनिवेशे, अविशत्—प्रविवेश । तत्र गच्छन्सन् क्षणेन क्षणमात्रतः सर्वं महावीरसंघं कृषक इव चिच्छेद । यथा कृषकः सर्वं सस्यादिकं क्षणेन छिनत्ति तथैव प्रतापोऽपि महावीरसंघं चिच्छेद । महावीरानमारयदित्यर्थः ॥ २६ ॥

अथोभयसैनिकयोः कीदृग् युद्धमभूदिति दर्शयति—ततस्तदनन्तरमुभयोः सैन्ययोः खड्गाखड्गि—खड्गैश्च खड्गैश्च प्रहृत्य इदं युद्धं प्रवृत्तमिति

चरः—तदनन्तरं कस्यचित्प्रतापभटस्य कबन्धस्य महदाश्चर्यकरं किमपि शौर्यं व्यलोकि ।

धृत्वा खड्गं कबन्धः क्षतजशबलितो व्यूहमध्ये प्रविष्टो
नृत्यन्भिन्दन् प्रधावंश्चपलतरमसिं चालयन्सर्वतो द्राक् ।
शीर्षं जङ्घोदरं वाऽच्छिनदखिलमरेः सैन्यचक्रं समन्ताद्
विद्राव्यैवं स वीरस्तव विपुलबलस्यैकसंहारकोऽभूत्॥ २८॥

न यावन्निपतत्येकः कबन्धस्तावदन्यतः ।
उत्थाय तव सेनायां प्रविश्याहन्सहस्रशः ॥ २९ ॥

---

खड्गाखड्गि, तथा अश्ववारेषु कुन्ताकुन्ति-कुन्तैश्च कुन्तैश्च प्रहृत्येदं युद्ध प्रवृत्तमिति कुन्ताकुन्ति, महत् दारुण भयकरं सापरायिकं युद्धमासीत् ॥२७॥

अथ चर प्रतापसैनिकस्य कबन्धस्य कृत्य दर्शयति-धृत्वेति । क्षतजेन -रुधिरेण, शबलित -चित्रवर्णोपेत , कबन्ध -शिरोरहितो देह , खड्गं धृत्वा व्यूहमध्ये-त्वदीयसेनासन्निवेशे प्रविष्ट , तत्र नृत्यन्-कबन्धस्वभाव एवैष यदसौ यावन्न निपतति तावन्नृत्यत्येव । भिन्दन्-त्वदीयभटान्नाशयन्, प्रधावन्-द्रुततरगतित्वात् धावन्निव प्रतिभाति । सर्वतश्चतुर्षु दिक्षु, द्राक्-सपदि, चपलतरमतिचञ्चल, यद्वा-चपलतर यथा स्यात्तथा असिं चालयन्, प्रबलतरक्रोधावेशशौर्यसमुद्रेकात्प्रकुपितो वायुस्तथा कारयतीति कबन्धस्वभावः। स च कबन्धश्छिन्नस्वकीयशिरसश्चक्षुषाऽवलोकयन् कार्यं करोतीति दर्शयति। अरे -शत्रोरेव न तु स्वकीयस्यापि शीर्षं-मस्तक वा अथवा-जङ्घोदर-जङ्घा च उदर च । प्राण्यङ्गत्वादेकवद्भावः । अच्छिनत् । अखिलमिति क्रियाविशेषणम् । अखिल समस्त यथा स्यात्तथाऽच्छिनत्-प्रबलतर-वायुप्रवेगाभिघातात्तथाऽच्छिनत् यथा द्विधैवाभवदित्येव स वीर कबन्ध समन्तात्सैन्यचक्र विद्राव्य-इतस्तत कृत्वा, तव विपुलबलस्य एकोऽद्वितीय सहारक.-सहारकर्ताऽभूत् । बहुतरसेनाविनाशस्तेन विहितोऽभूदित्यर्थ ॥२८॥

मृता अपि बहवस्तदीयभटास्त्वदीयसेना नाशितवन्त इति दर्शयति-न यावदिति । यावदेक प्रथम कबन्धो न निपतति तावदन्यत अन्यस्मात्स्थानादुत्थाय ततोऽपर उत्थायेत्यर्थ , तव सेनाया प्रविश्य सहस्रश

अक०—महदेव तत्सैनिकानां शौर्यम् । शौर्यसमुद्रेकादेव कबन्ध उत्तिष्ठति । वाढमियं मेवाडभूमिर्वीरप्रसविनी अस्तु । ततस्ततः—

चरः—तदन्तरा प्रतापः स्वकीयं चेतकनामानमश्वमितस्ततो भ्रामयन् कमपि मृगयमाण इवासीत् । स च यत्रैवायाति, तत्रैव त्रस्ता इव भवदीया भटाः पलायमाना आसन् । तानवलोक्य प्रताप एवमवादीत्—

क्षुद्रास्त्रासं जहीत द्विपरदनभिदो मामकोऽसौ कृपाणो
युष्मद्देहेषु लज्जां चरति निपतने मा पलायध्वमस्मात् ।
शक्के ! त्वं तिष्ठ तावन्न खलु मम रुषो भाजनं चासि, किन्तु
क्षत्रज्ञातिं द्विषन्तं कलुषितहृदयं मानमन्वेषयामि ॥ ३० ॥

अक०—तदानीमसौ मान. कुत्रासीत् ?

चरः—न जाने क्वाऽसौ अन्तर्हित., किन्तु सर्वसेनाया पश्चाद्भागे एव स्थित आसीदिति संभावयामि ।

अक०—किमसौ प्रतापाद्बिभेति ?

चरः—युज्यते चैतत्कथमन्यथा सर्वसेनायाः पश्चाद्भागे एव स्थितोऽभवत् ।

---

अहन् । अहन्निति हन्धातोर्लङि रूपम् , अवधीदित्यर्थ ॥ २६ ॥

अथ चर प्रतापस्य शौर्यातिशय दर्शयति—**क्षुद्रा** इति । भो भो मम भयेन पलायनपरत्वात्क्षुद्रा यूय त्रास जहीत–त्यजत । तत्र हेतु प्रदर्शयति–मामको–मदीयोऽसौ कृपाण युष्मद्देहेषु निपतने लज्जा चरति । अस्मात्कारणात् यूय मा पलायध्वम् । हस्तिदन्तच्छेदादिबृहत्कार्यकर्तुर्मत्खड्गस्य क्षुद्रेषु मृदुलतरयुष्मद्देहेषु निपातो लज्जास्पदमेवेति न युष्मानह हनिष्यामीति फलितं भवति । हे शक्के ! त्व तिष्ठ, तावदिदानीं त्व मम रुष.–मम क्रोधस्य भाजन न च नैवासि, नेदानीं त्वा हन्तुमहमुद्युक्तोऽस्मीति भाव । किन्तु क्षत्रज्ञातिं द्विषन्तं–स्वकीयस्यैव क्षत्रज्ञातेर्द्वेष्टार, कलुषितहृदयं–कलुषित हृदय यस्येति त मलिनचित्त मान–मानसिंहम् अन्वेषयामि–मृगयामीत्यर्थ ॥ ३० ॥

अक०—अस्तु, ततः किमासीत् ?

चरः—ततो रणोद्भटाः प्रतापभटास्त्वदीयसेनामाक्रान्तवन्तः ।

एकस्मात्करवालचालनगुरुः शोणिर्गुरुः स्थानत-
श्चन्दावत्परतोऽच्छिनत्तव भटान्स्वं चन्द्रहासं क्षिपन् ।
सालुम्बोऽपि विलुम्पयन् रणकथां वीरान् विचिन्वन्पुन-
र्मन्नाख्यश्च तरक्षुरेव विभिदे व्यूहं प्रविश्यान्तरा ॥ ३१ ॥

अत्रान्तरे ग्वालियरक्षितीशः
श्रेष्ठैर्भटैः स्वैः सहितो दधाव ।
सैन्यं त्वदीयं सहसा विदीर्य
जयध्वनिं केसरिवच्चकार ॥ ३२ ॥

अक०—ततस्ततः—

चरः—तदनन्तरमेव—

यात कोऽपि घटोत्कचाकृतिसमो दन्तावलानां बले

---

अथ चर प्रतापसैनिकाना कृत्य दर्शयति—एकस्मादिति । एकस्मात्स्थानत करवालचालनगुरु —खड्गशिक्षक शोणि —शोणिनामको गुरु., परतो द्वितीयस्मात्स्थानाच्चन्दावन्नामक सामन्त स्व-स्वकीय चन्द्रहास क्षिपन्सन् तव भटानच्छिनत् । पुन सालुम्बोऽपि रणकथा विलुम्पयन् सग्रामवार्तामेव समाप्नुवन्, सर्वेषा विनाशे स्वत एव रणकथामात्रमेवावशिष्यते इति सर्वानेव नाशयन्निति व्यज्यते । वीरान्विचिन्वन् पुष्पचयनमिव यथा मालाकार कलिका विहाय पुष्पाण्यवचिनोति । एव सालुम्बोऽपि कातरान् विहाय वीरानेव मारयन्, मन्नाख्यश्च साक्षात्तरक्षुरेव अन्तरा—सेनाया मध्ये, प्रविश्य व्यूह बिभिदे, तथा द्वावपि हतवन्तौ येन सेनासन्निवेश स्वत एव चिच्छेद इत्यर्थ ॥ ३१ ॥

अत्रान्तरे इति । व्यूहभेदनसमनन्तरमेव श्रेष्ठैरुत्तमै स्वै स्वकीयैर्भटै सहित ग्वालियरक्षितीश —ग्वालियरप्रदेशाधिपति दधाव सोऽपि आक्रमतेत्यर्थ । सहसा त्वदीयं सैन्य विदीर्य केसरिवत्—सिंह इव जयध्वनिं चकार । स च त्वदीयसैन्यपराजय मत्वा सिंहवज्जगर्जेत्यर्थ ॥ ३२ ॥

अथान्यस्य सैनिकस्य कृत्यमाह—यात इति । घटोत्कचस्य आकृतिरिव

तेषां मूलकवन्महीरुहभुजातुल्यान् करान्सोऽच्छिनत्।
त्रस्तस्तेन भवन्मतङ्गजगणः स्वां वाहिनीं तर्जयन्
मृद्नंश्चापि निषादिनोऽप्यगणयन् द्राग् धावितोऽभूत्ततः॥३३॥

अक०—ततस्ततः—

चरः—तदनन्तरं कबन्धशौर्यतो वित्रस्यमानं सहसा सालुम्बादीनामाक्रमणत. क्षुभ्यमाणं गजादीनां मर्दनादुद्विजमानं भवत्सैन्यं गजैः सहैव पलायमानमासीत्।

अक०—आः व्यर्थमेव मदोन्मादिना मया सर्पैः क्रीडितुमभिलषितम्। नैतदवगतं, यत्प्रतापान्मानो बिभेति। अस्तु, ततस्ततः—

चरः—तदनन्तरं पलायमानं स्वसैन्यमवलोक्य सलीमप्रभृतयो विमनस्का इवासन्। किन्तु शाहवाजनामकस्त्वदीय उपसेनापतिः सेनामध्ये प्रविश्य यश.पटहमवादीत्, अकथयच्चैतत्—भो भो सैनिका मा पलायध्वम्, यतः श्रीमानकबरः स्वयमेवासंख्यातां सेनामादाय समराङ्गणे समुपतिष्ठते।

अक०—साधु, साधु, युक्त एव तेन सेनाछलनप्रयोग आरब्धः। मन्ये स फलित एवाभवत्।

चरः—अथ किम्। ततस्तद्ढक्काशब्दश्रवणानन्तरमेव सर्वमपि

---

आकृतिर्यस्य स तथाभूत कोऽपि अज्ञातनामा प्रतापसामन्त दन्तावलाना—हस्तिना बले—सेनाया, यात.—प्राप्तोऽभूत्। स तेषा हस्तिना महीरुहभुजातुल्यान्—वृक्षबाहुसदृशान् करान्—शुण्डादण्डान्, मूलकवद् अच्छिनत्—अनायासेनैव ताश्चिच्छेदेत्यर्थ। ततस्तदनन्तरं तेन शुण्डादण्डच्छेदनकर्मणा त्रस्तो भयभीतो भवन्मतङ्गजगणो—भवद् हस्तिसमूह, स्वा—स्वकीया वाहिनी—सेना तर्जयन् मृद्नश्चापि मर्दयश्च निषादिनोऽपि—हस्तिपकानपि, अगणयन्—तेषामङ्कुशवचनप्रयोगममानयन्, द्राक—झटिति, धावितोऽभूत्। त्रस्तो हस्तिसमूह. स्वसेनाभिमुखमेव पलायितोऽभूत्तेन ते वाहिनी मर्दितेत्यर्थ॥३३॥

ते सैन्यं पुनः परावर्तत। फलितश्च तस्यायं तन्त्रप्रयोगः। ततः पुनरपि ततोऽप्यधिकतरं सोत्साहं ते बलं युयुधे।

अक०—ततस्ततः—

चर०—ततो व्यूहे भग्ने विनाशिते बहुतरे त्वदीये सैन्ये सलीमगजः प्रतापदृग्गोचरो बभूव। अथात्रैव मान इति मन्यमानः प्रतापः सोत्साहं कपोते श्येन इव तदुन्मुखमेव चेतकाभिधं स्ववाजिनं चिक्षेप।

अक०—आः सलीम! ममैवायं दोषः, यत्त्वां कातरहस्ते समर्पितवान्। ततस्ततः—

चरः—तदन्तरा सेनापतिरक्षकाः पञ्चशतं भटाः प्रतापं रोद्धुं ग्रहीतुं मारयितुं च समुपस्थिताः, परं तु न जाने स कथं केन कदा च सर्वानेव चिच्छेद। आः! परमसाहसिकोऽसौ। चेतकोऽपि परमशिक्षित एव।

अक०—ततस्ततः—

चरः—अथ गजोन्मुखं क्षिप्तश्चेतक उत्प्लुत्य सलीमगजकुम्भान्तरे पदद्वयं निधाय स्थित आसीत्। प्रतापोऽपि तत्र गच्छन्नेव हस्तिपकशिरश्चिच्छेद। कोऽयं ममोपरि समापतित इति मन्यमानो गजोऽपि तत्रसे।

अक०—आः! सलीमोऽपि किं हतः? हा मम जीवनसर्वस्व! हा ममाज्ञापरिपालनपरित्यक्तप्राण! हा प्रजावत्सल!

( इति ब्रुवन् क्षणं मूर्च्छति। )

(चरः सोद्वेगं तालवृन्तमादाय उद्बोधयति। उद्बुद्धः सन् अकबरः पृच्छति)

अक०—सलीमः किं जातः। कथय कथय त्वरितं किमिति नोच्यते।

चरः—महाराज! कुमारस्तु अपरिक्षत एव। भवान् किमित्युद्विजते।

अक०—( समुच्छ्वस्य ) कथय, स च कथं केन रक्षितः?

चरः—गजत्राससमनन्तरमेव चेतको भूमाववततार। परं प्रतापश्चेतकं पुनः परावृत्य तथैव गजकुम्भान्तरे चिक्षेप। पुनः प्रतापेन चालितः करवालः सलीममञ्चं चिच्छेद। सलीमश्च तदन्तरा एव निलीनः। परं तु हतः सलीम इति सेनायामुद्घोष आसीत्। ततो हा सेनापते! हा महाराजाधिराजप्राणप्रिय! हा युवराज! इति त्वदीयसैनिका विलपन्तो रुरुदुः। हस्तिपकशून्य-स्त्रस्तश्च स गजः सलीममादाय बहुतरदूरं पलायिष्ट।

अक०—(मनसि) अलमुद्धतशौर्येण, कातरोऽपि सन् जीवतु। नाहमतः परं प्रतापसंमुखे त्वां प्रेषयिष्यामि। ततस्ततः-

चरः—ततस्त्वदीयभटाः प्रतापं रुरुधुः। गृह्यतां वा हन्यतां वा एषः, मा पलायतामिति वदन्तः प्रतापं ग्रहीतुं हन्तुं चोद्युक्तवन्तः। उद्घुष्टं सेनायां सलीमो जीवतीति।

अक०—ततस्ततः—

चरः—ततो भवत्सैनिकैः सर्वतश्छन्नं प्रतापमवलोक्य सालुम्ब-कृष्णरावमहेश्वरसिंहप्रभृतयस्तदीयभटाः प्राणपणेन तमुद्धर्तुमयतन्त। सहस्रशस्त्वदीयभटांश्छिन्दन्तः प्रतापसविधे ते सर्वेऽपि समागतवन्त आसन्। तदानीं पलायमानं त्वदीयसैन्यमकबर समायात इत्युक्त्वा मानसिंहोऽवरुरोध।

अक०—ततस्ततः—

चरः—ततश्चतुर्षु स्थानेषु कुन्तैर्विद्धो गुलिकया हतोऽपि तैः सार्धं तव सैन्याज्जीवन्नेवाऽसौ निर्गतः प्रतापः। परमसौ प्रताप इति छत्रचामरलाञ्छनेन परिज्ञाते सति सर्वेऽपि त्वदीयभटाः पुनः पुनस्तमेवाक्रमन्त।

---

अत्रत्य सर्वोऽपि गद्यभाग सुगम इति न व्याख्यात।

अक०—साधु सैनिकानां प्रकारः। यतस्तस्मिन् हते सर्वे हता एव। ततस्ततः—

चरः—ततो 'निपात्यतामिदं हैममातपत्रम्, निपात्यतामिदं हैममातपत्रम्, एतच्चिह्नेन मेवाडाधिपतिमेव सर्वे समाक्रमन्ति' इति प्रतापसैनिकानां सर्वत एवोद्घोष. प्रावर्तत। परं तु प्रतापः स्वाग्रहेण राजचिह्नभूतं हैमच्छत्रं नैव न्यपातयत्।

अक०—ततस्ततः—

चरः—तदनन्तरं प्रतापस्योपरि निपततस्त्वदीयभटानालोक्य विजयतां विजयतां प्रताप इत्युद्घोषयस्त्वदीयसैनिकभटान्नाशयन् झालारमहीपति प्रतापस्याभिन्नहृदयः सुहृद् मन्नासिहः प्रतापसविधे समागत्य मेवाडाधिपतेश्चिह्नभूतं छत्रं गृहीत्वा स्वोपरि स्थापयामास,अकथयच्च प्रतापम्, 'अपसरतु भवान्संग्रामभूमेः। त्वयि जीवति सति स्वातन्त्र्यमधिगमिष्यति मेवाडः। आर्यस्थितिरपि चिरस्थायिनी भविष्यति। अन्यथा अद्यैव मेवाडपदे निपात्यते दासतायाः शृङ्खला, समूलमार्यस्थितिरपि विनङ्क्ष्यति।'

अक०—साधु तेन तर्कितम्। ततस्तत —

चरः—तदनन्तरं प्रतापो मेवाडाधिपत्यचिह्नं हैमच्छत्रं परित्यज्यापि त्वदीयभटांच्छेत्तुं प्रावर्तत। परमसौ स्वल्पेनैव कालेन मुमूर्षोश्चेतकस्य गतिमवगत्य शतशो विद्धं तच्छरीरं चावलोक्य संग्रामभूमेरपासरत्। त्वदीयभटाश्च मन्नासिहं निपात्य-'हतः प्रतापः, जितमस्माभिः' इत्युद्घोषितवन्तः।

अक०—अस्थाने भ्रान्ताः सैनिकाः। ततस्तत —

चरः-तदनन्तरं तदीयभटास्ततोऽप्यधिकतरेणोत्साहेन अयुध्यन्त। एतदवलोक्य युष्मद्भटैरवगतं नायं हतः प्रतापः।

तस्मिन्नेव क्षणे सेनाया बहिर्भागे गच्छन्तं प्रतापं तदनुधाविनौ सादिनौ तयोरप्यनुधाविनमश्वारोहिणं शक्तिसिंहमवलोक्य अवश्यमेव प्रतापो हतो निगडितो वा समेष्यतीति सर्वेऽपि निश्चितवन्त । शुभवृत्तान्तमिदं श्रावयितुमहमिहायातः ।

अक०—सुशोभनमिदं फलितं स्यात्ते वचनम् । ( पटीक्षेपः)

( इतो द्वौ सादिनौ निहत्य प्रताप समाह्वयति शक्तिसिंह । )

शक्ति०—भो भो नीलाश्वारोहिन् ! तिष्ठ ।

प्रता०—( परावृत्य ) आः ! शक्तिरेषः ।

( मनसि )

आपद्गतं नष्टसुहृत्सपक्षमेकाकिनं निर्जनभूमियातम् ।
हन्तुं ग्रहीतुं किमुपागतो मा बन्धुर्विपक्षाश्रयणाच्च शत्रुः॥३४॥

( प्रकाशम् )

रे रे निर्घृण ! देशघातक ! कुलाङ्गार ! क्षमाभारक !
स्वं सज्जीकुरु कुन्तमेष निपतत्यूर्ध्वं प्रतापः क्षणात् ।
हत्वा त्वामवनेर्निरस्य कलुषं त्वत्पापशुद्धिं चर-
न्नात्मज्ञातिविपक्षपक्षचरणे गर्वं च ते चूर्णये ॥ ३५ ॥

---

अथ शक्तिसिंहमवलोक्य प्रतापो मनसि तर्कयति—**आपदिति** । आपद गत आपद्गतस्तम्, अश्वस्य मरणासन्नत्वात् स्वस्य रुधिरनिस्सरणेन श्रान्तत्वाच्च आपत्तौ प्राप्तम्, अथ च नष्टा. सुहृद –मित्राणि, सपक्षा –सहायका यस्य स तम्, अत एव एकाकिनमसहायम्, अत एव निर्जनभूमियात–निर्जनस्थान प्राप्त मा बन्धुर्बन्धुभूत शक्तिसिंह किं हन्तुं–मारयितु ग्रहीतु वा समुपागत , यद्यपि बन्धौ नैतत्संभाव्यते पर तु विपक्षस्य शत्रोराश्रयणात् शत्रुरेव । यद्यपि वास्तविकनया नाय शत्रु , पर तु शत्रोराश्रयेण शत्रुरेवेत्यर्थ ॥३४॥

अथ शक्तिसिंह शत्रुरेवेति निश्चित्य कथयति—रे रे इति । रे रे नीचातिनीच ! निर्घृण ! निष्करुण ! आपत्तिसमयेऽपि प्रहारकारित्वा-

( शक्तिसिंहः प्रतापवचनं श्रृण्वन्नेव खड्ग कुन्तं च दूरत क्षिपति ।
हयाच्चावरोहति । रुदन्नेव कथयते । )

शक्तिसिंहः—भ्रातः ! क्षमस्व ममापराधम् । बाढमहं देशद्रोहकः ।
न जाने कुतो मे बुद्धौ भवितव्यतावशादापतितः
पाषाणः ।

( प्रताप शक्तिवचनमाकर्ण्य त्वरितमेव अश्वादवतरति । )

प्रता०—अहो व्याकुलितस्वान्त शक्तिसिंहः सहोऽदरः ।
माऽसौ तप्त चिरं कालमित्यालिङ्गत्युर:स्थले ॥ ३६ ॥

( शक्तिसिंह प्रतापपदे निपतति । )

---

त्करुणाराहित्य सूच्यते । देशघातक ! मेवाडदेशस्य दास्यतासपादने सहाय-कत्वाद्देशघातकत्वम् । कुलाङ्गार ! म्लेच्छदासतास्वीकारात्कुलप्रतिष्ठादाहकत्वेन कुलाङ्गारकत्वम् । क्षमाभारक ! पूर्वोक्तपापयुक्तत्वेन ज्येष्ठभ्रात्रा मया सह विरोधकरणाच्च पापाचारित्वेन पृथिव्या भारभूतत्व सूच्यते । एवं सबोध्य कथयति-स्व स्वकीय कुन्त सज्जीकुरु, यत एतत्ते हृदये सतापो माभूच्छलेन विद्धोऽहम् । अथ पुन प्रबोधयति—एष प्रताप क्षणात्क्षणमात्रेण ऊर्ध्वं प्रत्यासत्त्या तवैवोर्ध्वं निपतति । अथ फल दर्शयति—त्वा हत्वा, अवने-पृथिव्या कलुषं-दुरितं निरस्य । तव मरणेन पृथिव्या कलुषस्य निवृत्ति स्वत एव भवति । त्वत्पापशुद्धिं चरन् कुर्वन् सन् , त्वन्मारणमेव तव प्राय-श्चित्त संपादयन्सन् । आतमज्ञाते -स्वकीयक्षत्रियज्ञातेर्विपक्ष -शत्रुर्योऽकबरस्तस्य पक्षचरणे-तत्पक्षस्वीकारे ते तव गर्वमभिमान च चूर्णये—तव मरणेन अक-बरपक्षाश्रयणाज्जायमानस्तव गर्वोऽपि उपशमिष्यति ॥ ३५ ॥

अहो इति । अहो इत्युद्वेगेन कथने । व्याकुलित स्वान्त यस्येति व्याकुलि-तस्वान्त उद्विग्नचित्त सह सहनशील , अदर नास्ति दरो भीतिर्यस्य स तथा । निर्भीक । असौ शक्तिसिंह चिर काल मा तप्त, बहुकालपर्यन्तं सताप न भजतामिति उर स्थले आलिङ्गति । समस्तमप्यपराध क्षमित्वा स्नेहेना-लिङ्गतीत्यर्थ ॥ ३६ ॥

शक्तिसिंहश्च रुदस्तत्पदे निपतति । प्रतापोऽपि चेतसो द्रवीभावादश्रूणि विमुञ्चति ।

( तत्रस्था वनचारिण परस्पर कथयन्ति । पश्य पश्य )

**वनचारिणः—**

शक्तिः क्षालयते प्रतापचरणद्वन्द्वं स्वनेत्राम्बुभि-
र्मन्तुं स्वं क्षमयंस्त्रपाभरवशात्सलीयते भूतले ।
तापं स्वात्मनि कञ्चिदेष कुरुते म्लायन्प्रतापोऽपि त-
च्छीर्षे दृक्पयसाऽभिषिञ्चति मुहुर्हृद्राज्यपीठासने ॥ ३७ ॥

**प्रता०**—( शक्तिसिंहमुत्थापयति । ) कुतोऽयमनुरागः ।

न दासतां गच्छतु मातृभूमिस्तदर्थमेतान्भवतः सपक्षान् ।
संग्रामभूमौ पतितान्निरीक्ष्य त्वदर्थमेवाप्लवते मनो मे ॥ ३८ ॥

**शक्ति०**—भ्रातस्त्वदीयश्चेतको मुमूर्षुरिव प्रतिभाति ।

**प्रता०**—एतदवलोक्यैव संग्रामभूमेर्बहिरागतोऽहम् ।

( चेतक साश्रुनयन प्रतापाभिमुख पश्यन् पञ्चत्व गत । )

( शक्ति सानुनयं प्रतापाय स्वकीयमश्वं समर्पयति । )

---

एतदवलोक्य तत्रस्था वनचारिण परस्पर कथयन्ति—**शक्तिरिति** । शक्ति स्वनेत्राम्बुभि —स्वकीयाश्रुभि , प्रतापचरणद्वन्द्वं क्षालयते धावतीत्यर्थ । तथा स्व मन्तु स्वकीयापराव क्षमयन्सत्रपाभरवशात् लज्जाक्रान्ततया भूतले पृथिव्या सलीयते निमज्जतीत्यर्थ । एष प्रतापोऽपि म्लायन्मन् स्वात्मनि स्वचित्ते कञ्चित्तापं कुरुते। मया किमिति स निष्काशित इत्यादिरूप पश्चात्ताप करोति। तथा दृक्पयसा-स्वकीयनेत्रजलेन,तच्छीर्षे-शक्तिसिंहशिरसि हृद्राज्यपीठासने-स्वकीयहृदयरूपे राज्यपीठासने, मुहुर्वार वारम् अभिषिञ्चति । शक्तिसिंहस्य प्रतापचरणे निपतनात्तदश्रुभि प्रतापचरणक्षालनमुत्प्रेक्षते । प्रतापनेत्राम्बुनो बिन्दुरूपेण शक्तिसिंहशिरसि निपतनादभिषेकरूपेणोत्प्रेक्षते ॥ ३७ ॥

अथ शक्तिसिंहोऽनुरागकारण दर्शयति—**न दासतामिति** । मातृभूमिर्मेवाडभूमिर्दासता न गच्छतु । तदर्थमेतान्प्रत्यक्षतयाऽवलोकितान् भवत सपक्षान्—भवत्सहायकान्, सग्रामभूमौ पतितान्मृतान्निरीक्ष्य त्वदर्थमेव—त्वदुद्देश्यकत्वेनैव, मे—मम मन आप्लवते । त्वदर्थमेवाय मे देहो भवतु इति मनोऽभिलषतीत्यर्थ ॥ ३८ ॥

प्रता०—त्वां पदचारिणं प्रेषयितुं नाहमुत्सहे ।

शक्ति०—( दूरतो दर्शयति ) एतौ हयौ स्त । तयोरन्यतरेण गमिष्यामि ।

प्रता०—कुत एतयोरिहागमनम् ?

शक्ति०—सेनातो बहिर्गच्छन्तं त्वामवलोक्य द्वौ म्लेच्छसादिनौ मारयितुमनुधावितौ । एतदवगत्य अहमपि द्रुततरं तावनुगत्य अन्तरैव हत्वा तव चरणयोः प्राप्तः । अधुना स्थानान्तरमपसरतु भवान् । कदाचिच्छत्रुसैनिका मद्विलम्बात्संदिहाना इहाप्यागच्छेयुः । अतः परं त्वरितमेवाहं दासतायाः शृङ्खलां भङ्क्त्वा त्वत्सेवायां समेष्यामि ।

( प्रतापः शक्तिसिंहाश्वमारुह्य निष्क्रान्त । )

( शक्तिश्च तयोरन्यतरेणाश्वेन रणभूमिमागच्छति )

मानः—शक्ते ! किं निहतः प्रतापः ?

शक्ति०—स नैव हतः, किन्तु स एव तौ द्वावपि सादिनौ निहतवान् । ममाप्यश्वो निहत इति तयोरन्यतरेणाश्वेन अहमागतोऽस्मि ।

मानः—अहो सायंकालः संवृत्तः । पश्य—

आरुण्यं गगनाङ्गणे समुदितं मुष्णत्प्रतीच्या मुखात्
क्षोण्यां धावदशेषवस्त्वपहरत्प्राचीपदादुद्भवत् ।
ज्ञानं चाप्यपसारयत्स्वपरयोः शान्तिं समुत्पाद्य—
न्नीलैर्लिम्पदिवान्तरं गतमिदं ध्वान्तं समुज्जृम्भते ॥ ३६ ॥

---

अथ मान. सायकालमवलोक्य कथयति—आरुण्यमिति । प्रतीच्या – पश्चिमाया मुखात् गगनाङ्गणे-आकाशे समुदितम् आरुण्य मुष्णत्-चोरयत्, क्षोण्या–पृथिव्या धावत्–त्वरितगत्या प्रसरत् । अशेषवस्तु, जातित्वादेकवचनम् । समस्तान्यपि वस्तूनि अपहरत् । प्राचीपदात्पूर्वदिश स्थानात् उद्भवत् प्रादुर्भवत् । तथा स्वपरयोर्ज्ञान च अपसारयत्–अयमात्मीय अय पर

इति वाद्यतां विजयपटहः(इति तदाज्ञया कश्चित्सैनिको विजयपटहं वादयति)
( इतश्चन्दावत्सेनापतेराज्ञया प्रतापसैनिकोऽपि विजयपटहं वादयति। इति निवर्तन्ते उभयोरपि सेनयो सैनिका ।)

( तत प्रविशन्ति रणभूमौ वीरभद्रसहिता पिशाचा राक्षसाश्च । )

**पिशाचः—अले ले सज्जो मालिअस्स अस्स उसिणो लुहिलो**
अरे रे सद्यो मारितस्य अस्य उष्ण रुधिरम् ।
**अले अम्हे अप्पाणं घडे भलिस्सामो ।**
अरे वयम् आत्मना घटान्भरिष्याम ।

**द्वि० पिशा०—अले ले इमस्सि बहुयलं मज्जा । अणेण अम्हाणं**
अरे रे अस्मिन् बहुतरा मज्जा । अनेन अस्माकं
**बहुकालो गमिस्सइ ।**
बहुकालो गमिष्यति ।

**तृ० पिशा०—अले अम्हेहि मन्नासीहसीसो लद्धो ।**
अरे अस्माभिर्मन्नासिंहशीर्षं लब्धम् ।
**अणेण सीसेण महेसलो महं सुमुण्डमालं पलिगुम्फइस्सइ ।**
अनेन शीर्षेण महेश्वरो महतीं सुमुण्डमाला परिगुम्फयिष्यति ।
**अपुव्वलूवोय सुमेलुसंगओ विलक्खणो लुद्दउलो लगिस्सइ४०**
अपूर्वरूपश्च सुमेरुसगत विलक्षण रुद्रोरो लगिष्यति ४०

---

परकीय इति ज्ञान निवारयत्। शान्ति समुत्पादयत्—सर्वेषा स्वस्वव्यपाराद्वि-वृत्ते शान्ति जनयन्नित्यर्थ । अन्तर—पृथिव्याकाशयोरन्तरालं नीलै. नील-वर्णैर्लिम्पदिवेत्युत्प्रेक्षा । गतभिद-गतो भिदो यस्मात्,एकाकारतया अभेदरूपेण स्थित ध्वान्तमन्धकार—समुज्जृम्भते—क्रमश ऊर्ध्वतिर्यग्भूभागादिप्रदे-शेषु वर्धते ॥३६॥

अथ तृतीयपिशाचो मन्नासिंहशीर्षं लब्ध्वा कथयति—**अनेनेति**। अनेन मन्नासिंहशीर्षेण—महेश्वर —श्मशाननिवासी रुद्रो महती—बृहत्तरा सुमुण्डमाला-विशिष्टवीराणा मुण्डैर्निर्मिता माला परिगुम्फयिष्यति । ततश्च अपूर्व रूप यस्य तत्तथा लोकोत्तरशोभातिशायि, सुमेरुणा सगत—सुमेरुसगतम्, अद्या-

द्वि० पिशा०—अले ले मए हत्थिसमूहवित्तासअस्स महेसल-
अरे रे मया हस्तिसमूहवित्रासकस्य महेश्वर-
सीहस्स सिलो लद्धो ।
सिंहस्य शिरो लब्धम् ।
एयं जगओ जणणी लुद्दाणी कालिआ सुमालाए ।
एतज्जगतो जननी रुद्राणी कालिका स्वमालाया ।
मज्झे धलिऊण महंसमसाणं साहु भम्मिस्सइ ॥४१॥
मध्ये धृत्वा महाश्मशान साधु भ्रमिष्यति ॥ ४१ ॥

वीरभद्रः—पश्यत पश्यत—
एष क्ष्मातलशायिनं शवमुरःप्रान्ते निधायोन्नतै-
रुग्रैः स्वैर्नखरैर्विपाट्य किमपि क्रोडादुपादित्सते ।

---

वधि तथाविधवीरस्यानुपलब्धे सुमेरुरहितामेव माला दधाति । अत पर लोकोत्तरशौर्यशालिनस्तस्य शीर्ष मुराडमालाया सुमेरुर्भविष्यति, तत्सबन्धश्च उरसा भविष्यति । एव सुमेरुसगत विलक्षणम्—अनिर्वचनीयशोभायुक्त रुद्रोर लगिष्यति, तथाविधमालया अत्यन्तशोभायुक्त महेश्वरस्य वक्ष स्थलं भविष्यतीति भाव ॥ ४० ॥

**एतदि**ति । जगत —सकलचराचरलोकालोकस्य, जननी—उत्पादयित्री, रुद्राणी कालिका एतन्मुराड स्वमालाया उत्तमवीरपुरुषाणा मुराडैर्निर्मिताया आत्ममालाया मध्ये धृत्वा तत्रैनदपि परिगुम्फय महाश्मशान तत्रैवास्या निवासात् साधु-सम्यक् प्रकारेण यथेच्छं भ्रमिष्यति ॥ ४१ ॥

अथ वीरभद्र कस्यचित्पिशाचस्य कृत्यं स्वसहचरान्दर्शयति—**एष** इति। एष पुरो दृश्यमान पिशाच , क्ष्मातलशायिनं—पृथिव्या निपतितं, शव—कस्यचिद्वीरस्य मृतदेहम्, उर प्रान्ते—उरस वक्षस्थलस्य समीपे, निधाय—स्थापयित्वा, जङ्घाद्वयस्योपरि स्थापने उर प्रान्ते स्वत एव स्थितिर्भवति । उन्नतैरुग्रैरतिकठोरै स्वैर्नखरै.-स्वकीयनखैर्विपाट्य क्षिप्र—शीघ्रमेव तन्मध्यात्सम्यक्

मज्जां लिम्पति पादयोः परिदधात्यन्त्रं तनौ कौतुका-
द्व्यग्रं पिशितं समुन्नतरदैरुत्कृत्य भुङ्क्ते सुखात् ॥४२॥

( ततो निष्क्रान्ताः सर्वे । )

इति श्रीमहामहोपाध्यायमथुराप्रसादकृतौ वीरप्रतापनाटके चतुर्थोऽङ्कः ।

---

प्रकारेण उपादित्सते ग्रहीतुमिच्छतीत्यर्थः । मज्जा पादयोर्लिम्पति । शिरो-वर्ष्मणो शीर्षदेहयोरन्त्र परिदधाति, अन्त्रमेव स्वदेहे परिधत्ते इत्यर्थः । अव्यग्रं यथा स्यात्तथा समुन्नतरदैस्तीक्ष्णोन्नतदन्तैः, पिशितं–मांसम् उत्कृत्य–तत किञ्चिच्छित्त्वा, सुखात् भुङ्क्ते खादतीत्यर्थः । 'भुजोऽनवने' इत्यात्मने-पदम् ॥ ४२ ॥

इति श्रीमहामहोपाध्याय–विद्यावारिधि–सर्वतन्त्रस्वतन्त्रमथुराप्रसादकृतौ
वीरप्रतापनाटके चतुर्थोऽङ्कः ।

# पञ्चमोऽङ्कः ।

( अजमेरपत्तने स्वशिविरे एकाकी स्थितोऽकबरश्चिन्तयति । )

अक०—हतो भटैः स्याद् यदि वा गृहीतः
संतापकारी तपनः प्रतापः ।
ततो भवेद्राज्यमखण्डमेतत्
सुखी परः स्यामपि सार्वभौमः ॥ १ ॥

कथं समरभूमेर्नाद्यापि प्रतिनिवर्त्तन्ते सैनिकाः । अहो मानोऽपि चिरयते । किमसौ प्रतापो निःसृत , किं वा रात्रौ पुनः संग्रामः प्रवृत्तः । ( पुनर्दक्षिणदिशमवलोकयस्तर्कयति । )

एतद् भूमिपरागरञ्जितपदं पिङ्गं नभो दृश्यते
भूयो भूय इव क्षमातलसमुद्भूतो ध्वनिः श्रूयते ।
एष श्यामलमत्तनागनिवहो गच्छञ्छनैर्ज्ञायते
नूनं मानसलीमशक्तिसहितैः सैन्यैः समागम्यते ॥ २ ॥

---

यदकबरश्चिन्तयते तद्दर्शयति–हत इति । सतापकारी–दु खदाता, तपन –साक्षात्सूर्यस्वरूप , सिंहो माणवक इति वत्सूर्यगतपवित्रकारित्व-भास्वत्कान्त्यादिगुणविशिष्ठ , यद्वा-संतापकारी–मानसिकदु खदाता, तपन – तपस्वी । प्रताप भटै प्रत्यासत्त्या अस्मद्भटैर्हतो मारित स्यात् यदि वा गृहीत स्यात् , ततस्तदनन्तरमेतद्राज्यमखण्डं संपूर्णं स्यात् , अह परमुत्तम सुखी, सार्वभौमोऽपि स्याम् ॥ १ ॥

अकबरो दक्षिणदिशमवेक्षमाणस्तर्कयति—एतदिति । एतन्नभ भूमे -पृथिव्या परागैर्धूलिभीरञ्जित पद स्थान यस्येति तथाभूत सत्पिङ्ग-पीतवर्ण दृश्यते । सैन्यागमने धूलिभिराच्छादित गगनमवगम्यत इत्यर्थ । तथा भूयो भूय इव वार वारमिव क्षमातलसमुद्भूत पृथ्वी-तलाज्जायमानो ध्वनि श्रूयते । तथा एष प्रत्यक्षतया विलोक्यमान शनैर्मन्द

( तत प्रविशति शाहबाजमानसिंहसहित सलीम । )

**सलीमः—**

**मेवाडराजं हतमित्रवर्ग भवद्भटैश्छिन्ननखाङ्कुशास्त्रम् ।**
**सहायभिन्नं विपिनेऽतिघोरे विद्राव्य सिंहं प्रणुते सलीम ॥३॥**

**मानः—प्रतापगर्वशमको मेवाडध्वजहारकः ।**
**सार्वभौमस्य मानोऽसौ वन्दकी कुरुते प्रभोः ॥ ४ ॥**

**अक०—**( साश्चर्यमिव । ) **किमसौ प्रताप. पलायितः ? न धृतो नैव वा हतः ? । अधृतेऽहते वा प्रतापे नाहं सार्वभौमः ।**

**सली०—भिन्नसपक्षो हतप्राय एव सः ।**

**अक०—कथमसौ जीवन्नि सृतः ? श्रुतमेतन्मया मुल्तानी-खुरासान्यौ भटावनुधावितौ, तदनु शक्तिसिंहश्च प्रधावित इति पुनरपि कथमसौ न निहतः ?**

**मानः—शक्तिसिंहोऽपरित्नत एव परावृत्त इति संभावयामि**

---

मन्द गच्छन् श्यामल –श्यामवर्णो मत्तो–मदोन्मत्तो गजनिवहो–हस्ति-समूहो ज्ञायते । नून–निश्चितमेव मानसलीमशक्तिसहितै सैन्यैर्हस्त्यश्व-पदातिभि समागम्यते । सैन्यस्य ध्वन्यादिभिरिदमवगम्यते मेवाड विजित्य सकुशलैरेव सर्वैरागम्यते ॥ २ ॥

सलीम प्रणमन्सन्स्वकार्यं सूचयति **मेवाडराजमि**ति । सलीम , हत मित्रवर्गो यस्य स त तथोक्तम् । भवद्भटैस्त्वत्सैनिकैश्छिन्नानि नखाङ्कुशास्त्रा-णि यस्य स तम् । सिंहपक्षे–नखान्येव अङ्कुशास्त्राणि । प्रतापपक्षे-नखानीव अङ्कुशास्त्राणि यस्य तम् ,सहायभिन्न सहायैरपरभटै ,अन्यत्र ऋच्छव्याघ्रादि-भिर्भिन्न रहितम् । सिंह–सिंहस्वरूप मेवाडराजं-प्रतापम् अतिघोरे-महाभयकरे विपिने–वने विद्राव्य–पलाययित्वा प्रणुते–नमस्करोति ॥ ३ ॥

अथ मान स्वकार्य सूचयन् प्रणुते—**प्रतापे**ति । प्रतापगर्वस्य शमक -प्रतापगर्वविनाशक इत्यर्थ , तथा मेवाडस्य–मेवाडदेशस्य ध्वजस्य–पताकाया हारक –मेवाड विजित्य तत्पताकाया हर्ता, असौ मानो मानसिंह सार्वभौमस्य-सर्वभारतभूभागाधिपते प्रभोरकबरस्य वन्दकीं–वन्दना कुरुते ॥ ४ ॥

शक्तिसिंहेनैव तौ निहत्य स्वभ्राता रक्षितः ।

अक०—आम् ! युक्तं संभाव्यते एवमेवैतत् । अस्तु । प्रतापो ग्रहीतव्यो हन्तव्यो वा, चिरकालं स्थितः पुनरुपद्रोष्यति ।

शाहवाजः—मामाज्ञापयन्तु । महाराजाः पुनः पश्यन्तु ।

विजितोऽपि धृत. परं विमुक्तो नियतेर्भोग्यतया तरक्षुरेष ।
क्षणशोऽथ हठान्नयामि चैनं प्रणतं त्वत्पदयोर्विजित्य भूयः ॥५॥

अक० – शाहवाज ! सर्वं त्वयि संभाव्यते । अथ त्वरितमेव गच्छ ।

निविडविपिनमध्ये कन्दरामन्दिरे वा
शिखरिशिखरभागेऽधित्यकायां स्थितं वा ।
सकलमवनिभागं शोधयित्वा निबध्य
त्वरितमरिममुं त्वं मत्पदे आनयेथाः ॥ ६ ॥

---

अथ शाहवाज प्रतापग्रहणाय प्रतिजानीते—**विजित** इति । तरक्षु - सिंह , एष प्रताप , अस्माभिर्विजित –विजय प्रापित , धृतोऽपि-गृहीतोऽपि पर–केवल नियतेर्भोग्यतया विमुक्त , धृत एवासीत्किन्तु भवितव्यतावशान्मुक्त यज्जातं तज्जातम् । अथ विमुक्तस्य तस्य पलायनानन्तर भूयो द्वितीयावृत्त्या क्षणश –क्षणमात्रसमयेन विजित्य त्वत्पादयो प्रणत–त्वच्चरणारविन्दे निपतितम् । अथवा, प्रणत पराजयेन बन्धनात्स्वप्राणरक्षणाय नम्रीभूतमेनं प्रतापं हठात्त्वत्पदयोर्भवत्पादसमीपे नयामि । गमनानन्तर स्वल्पेनैव कालेन नेष्यामीत्यर्थ । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानत्वाल्लट् । 'विषमे ससजा गुरू अनोजे सभरा यो यदि मालभारिणीयम् ' इति लक्षणान्मालभारिणी वृत्तम् ॥ ५ ॥

अकबर शाहवाजमाज्ञापयति—**निविडेति** । त्वं सकलमवनिभागंमेवाडभूभागं, शोधयित्वा निविड–सघन यद् विपिन–वन तस्य मध्ये स्थितम् अथवा-कन्दरैव मन्दिर–भवन तत्र स्थितम् । यद्वा–कन्दरा च मन्दिर चेति कन्दरामन्दिरम् 'जातिरप्राणिनाम्'इत्येकवद्भाव , तस्मिन्, कन्दराया मन्दिरे देवालये गृहे वा स्थितम् । तथा पर्वतस्य भागे प्रदेशे शिखराणा

तस्य स्थितेः शोधनार्थं पञ्चत्रिंशत्सहस्रसंख्याकान्भटान्नयस्व।

( ततः प्रविशति स्वानुचरभटैरनुगम्यमानः शक्तिसिंहः । )

शक्ति०—जय एकलिङ्गेश्वरस्य !

मानः—( मनसि ) कथमसौ एकलिङ्गेश्वरस्य जयं प्रार्थयते। बाढं विरक्तोऽस्तीति ज्ञायते ।

अक०—कथमसौ प्रतापो विनिःसृतः ? कथं वा त्वया परित्यक्तः ?

( अन्तरैव सलीमः शक्तिसिंहं वक्ति । )

सली०—सत्यं कथय, त्वामभयदानेन परिपालयामि ।

शक्ति०—तौ भटौ निहत्य मया प्रतापो रक्षितः ।

( सर्वे साश्चर्यमिव शक्तिसिंहमवलोकन्ते । )

सली०—कस्मादसौ रक्षितः ?

शक्ति०—सालुम्बतातो निहतः समक्ष-
मन्याययातैः सुभटैस्त्वदीयैः ।
रुग्णे विषण्णे च पलायमाने-
ऽनुधावनं क्रौर्यमिदं न शौर्यम् ॥ ७ ॥

---

वा भागे स्थितम् । भागे इत्यत्र जातित्वादेकवचनम्, अथवा-अधित्यकाया पर्वतस्योपरि स्थितम् । अमुमरिं प्रतापं निबध्य त्वरित—शीघ्रं मत्पदे आनयेथा, मच्चरणौ आनय । पदे इत्यत्र 'ईदूदेद् द्विवचनम्'इति प्रगृह्यत्वान्न अयादेशः ॥ ६ ॥

शक्तिसिंहः अकबरपक्षत्यागकारणपुरस्सरं प्रतापरक्षणे कारणं प्रदर्शयति—सालुम्बेति । समक्षं मम समक्षमित्यर्थः । अन्याययातैः-अन्यायेन यातैः पश्चाद्भागान्निलीय प्राप्तैस्त्वदीयैः सुभटैरुत्तमभटैर्न तु साधारणभटैः सालुम्बतातो निहतः । पितृस्थानीयः सालुम्बतातो मम समक्षमेव युष्मद्भटैरन्यायान्निहत इति पक्षत्यागकारणं बीजरूपेण सूचितम् । अथ प्रतापरक्षाकारणं दर्शयति । रुग्णे-व्रणादिना मूर्छिते, विषण्णे-पुत्रादिमरणेन विषादयुक्ते रणात्पराङ्मुखे इत्यर्थः, तथा पलायमाने-पलायनं कुर्वति सति अनुधावनं-पश्चादाक्रमणकरणं शौर्यं न । नैतच्छूराणां कार्यम् किं तु

सली०—तर्हीदानीमस्मत्पक्षाद्विरक्तोऽसि ?

शक्ति०—बाढं विरक्तोऽस्मि ।

सली०—तर्हि यथेच्छं गच्छ । अभयदानेन परिपालितोऽसि ।

शक्ति०—समरैकव्रतानां मृत्युनिर्भयाणां भटानां नैव कुतोऽपि भयमस्ति । ( इति ब्रुवन्नेव स्वानुचरभटैः सहैव निष्क्रान्तः । )

सली०—युक्तं मानेन तर्कितम् ।

मानः—मया तदाकृत्या चेष्टया व्यवहारेण चावगतमासीत् । भवता युक्तमेव कृतम्, यदसौ निस्सारितः । न जाने पितृरोषाद् रुष्टस्सन् कमप्याक्रमेत् ।

अक०—यावदसौ प्रतापसाहाय्याय समुपतिष्ठते ततः पूर्वमेव प्रतापो ग्रहीतव्यः । अन्यथाऽस्य साहाय्येन स प्रबलो भविष्यति ।

शाहवाजः—कोऽसौ वराकः ?

द्वित्रैर्दिनैस्तं विनिपात्य चैनं बद्ध्वा भवत्पादतलेषु नेष्ये ।
कोऽयं वराकः किमु वा प्रतापो रणे धृतासौ मयि युध्यमाने ॥८॥

अक०—तर्हि नेदानीं कालः प्रतीक्षितव्यः ।

सली०—इदानीं वर्षाकालः संवृत्त इति द्वित्रमासानन्तरमेवाभियातव्यम्, अन्यथा पर्वतीयनद्यादिभिर्महती हानिः संपत्स्यते, विजयाशा च दूरे स्थास्यति ।

अक०—( मानस्याभिमुखं पश्यन् ) मानसिंह ! किमत्र युज्यते ?

मानः—युक्तमेव सलीमस्तर्कयति ।

अक०—शाहवाज ! एवमेव भवतु । प्रतीक्षस्व तावद्वर्षाकालम् ।

( ततो निष्क्रामन्ति मानप्रभृतयः । )

अक०—दौवारिक ! विश्रान्तिमभिलषामि तत्स्थानं प्रदर्शय, कुत्रेदानीं विश्रमितव्यम् ।

---

इदं क्रौर्यम्, क्रूराणामेवेदं कार्यम् । अश्वस्य मरणासन्नत्वात्प्रतापो विषादयुक्त एवासीद्, अतः स मया रक्षितः ॥ ७ ॥

दौवा०—इदो इदो महाराओ ।

इत इतो महाराज ।

( इति दौवारिकेण सह निष्क्रामत्यकबर )

( पटीक्षेप । )

( इत. प्रतापो वर्षाकालेऽवकाशमासाद्य अवशिष्टान्सामन्तान्सैनिकाश्चैकत्रीकृत्य गोगन्धपर्वते स्थित शत्रोरागमन प्रतीक्षते । )

( शक्तिसिंह स्वभटै सह परामृशन्गच्छति । )

शक्ति०—राज्ञः समीपे रिक्तपाणिभिरस्माभिर्नैव गन्तव्यम् ।

भटाः—इयमेव शास्त्रमर्यादा तद्योग्यमुपायनं गृहीत्वैव गन्तव्यम् ।

शक्ति०—ममैतत्प्रतिभाति, यदिदं पुरतो दुर्ग विलोक्यते तदेतद्विजित्य एनदेवोपायनं दातव्यम् ।

भटाः—एतत्क्षणशो वयं विजेष्यामहे । ( इति तद्विजित्य प्रतापसमीपे स्वभटै सहित शक्तिसिंह समुपतिष्ठते । )

शक्ति०—मातृभूमिसुरक्षार्थं गृहीतासिव्रतानुगः ।

लघुभ्राता त्वदीयोऽयं शक्तिस्ते प्रणतः पदे ॥ ६ ॥

( इति प्रणम्य प्रतापचरणे तालिका समर्पयति । )

प्रता०—कीदृगियं तालिका ?

शक्ति०—भवच्चरणारविन्दसेवार्थमागच्छता मया विचारितमिदम्, यत्प्रभो राज्ञ समीपे रिक्तपाणिना नैव गन्तव्यमतः ' किसरूर ' दुर्ग विजित्य मेवाडध्वजं तत्रारोपितम् । कतिचिद्भटाश्च तत्र तद्रक्षार्थं नियुक्ताः । इयं तदुद्घाटनतालिका ।

---

अथ शक्तिसिंह स्व प्रतापानुगामिन सूचयन्प्रणुते—**मातृभूमी**ति । मातृभूमे शोभनप्रकारेण रक्षार्थं ग्रहीत असिव्रतो येन स, तस्य अनुग – अनुचर । भवदनुचर इत्यर्थ, लघुभ्राता तव लघुभ्राता, त्वदीय –सर्वथा त्वत्सबन्धी, अयं शक्तिसिंहस्ते पदे प्रणत –भवच्चरणे निपतितोऽस्तीति ॥ ६ ॥

प्रता०—प्रसन्नोऽस्मि त्वदीयैतत्कृत्येन, तत्तवैवाधिकारे तिष्ठतु।
(इति तालिका ददाति।)

शक्ति०—किमत परं युद्धाद्विराममभिलषन्ति महाराजाः।

प्रता०—असंभावितमेतत्—

यावन्म्लेच्छपते. समिद्धमखिलं गर्वं न संचूर्णये
तापं चात्मकृतौ परं विदधतं सन्धौ न वा पातये।
मानस्याप्यभिमानमुन्नतमहं सर्वं न चोच्छेदये
तावद् युद्धसमुद्यमात्स्वहृदयं स्वप्नेऽपि नावर्तये ॥ १० ॥

शक्ति०—युक्तम्, एवमेव युज्यते। अहं तु भवतामनुचर एव।
यावज्जीवं युद्धाय समुपस्थास्ये।

(तदनन्तर स्वभटान्प्रतापसाहाय्यार्थं विमुच्य स्वयं तत्रैव समुपगच्छते शक्तिसिंह।)

वर्षाकालसमाप्त्यनन्तरं मानशाहवाजफरीदखाप्रभृतयः प्रताप ग्रहीतु महता बलेन सनह्य प्रचलिता। तत्र गत्वा गोगन्ध-पर्वत रुरुधु।)

विष्कम्भः।

(तत प्रविशति कस्याञ्चिदरण्यान्या प्रतापं मृगयमाण इन्द्रपुराधिपति

सामन्तः—(तत्र कञ्चन भटमवलोक्य मनसि।)

नूनमनेन प्रतापसैनिकेन भाव्यम्। को वाऽन्य एकाकी एवंभूतायामरण्यान्यां भ्रान्तुं शक्नोति। अस्तु, तावदा-

---

**यावदिति।** यावन्म्लेच्छपतेरकबरस्य समिद्ध वृद्धिं गतम् अखिल गर्वं न संचूर्णये-नैव नाशयामि। आत्मन कृतौ युद्धादिरूपे कार्ये परमत्यन्तं तापं-पश्चात्ताप विदधतं कुर्वन्त सन्धौ न पातये-सन्ध्यर्थं नैव पातयामि च। तथा अह समुन्नतं-लोके विजयित्वेन प्रवृद्धं मानस्य-मानसिंहस्यापि सर्वमभिमान न च उच्छेदये-समूल नैवोच्छेदयामि, तावद् युद्धसमुद्यमाद्-युद्धोद्योगात्स्वहृदय स्वप्नेऽपि न आवर्तये-तावत् युद्धान्नैव विरतो भवामीत्यर्थ ॥ १० ॥

भाषणेन प्रत्येमि । ( स्फुटमवलोक्य ) अहो अयं प्रताप-सहायको रुद्रसिंहभटो ज्ञायते । ( प्रकाशम् ) भो रुद्रसिंह ! जय एकलिङ्गेश्वरस्य !

रुद्रसिंह.—अहो इन्द्रपुराधिपति ! जय एकलिङ्गेश्वरस्य !

सा०—कुत इदानीं प्रयातोऽसि ?

रुद्र०—आगरानगरात् ।

साम०—श्रूयते अकबरेण स्त्रीणां चातुर्यशिक्षणाय विपणिः कारिता ।

रुद्र०—एवं कथय आर्यगौरवनाशाय व्यभिचारशिक्षणाय च विपणिः कारिता ।

साम०—कथम् ?

रुद्र०—स चाकबरः स्वयं प्रच्छन्नवेषेण सानुचरो गत्वा आर्य-मर्यादां नाशयति ।

साम०—तर्हीदानीमार्यमर्यादा महानदतटीव संवृत्ता, ईश्वर एव तां रक्षतु ।

रुद्र०—ईश्वरस्त्विदानीं पाश्चात्यदेशेषु परिभ्रमणार्थं गतः । तावन्मेवाडप्रदेशजाता एव रक्षन्तु ।

साम०—श्रूयते प्रतापो रणात्कातरः स क्वचिदपि पलायित ।

रुद्र०—नहि नहि, सोऽद्यापि स्वातन्त्र्यदेवतामाराध्नोति । तद्-वृत्तान्तश्च कारुण्यजनक एव । तं कथयतो मे हृदय-मवरुध्यते ।

साम०—किं तत् ?

रुद्र०—शृणु तावत्संक्षेपेण कथयामि । यदा अकबरभटा गोगन्धपर्वतमवरुह्य स्थिता आसंस्तदा तत्र ससामन्तः प्रतापः किञ्चित्कालं युद्ध्वा कोमलमीरपर्वते अग-च्छत् । इतो रात्रौ शिविनींसिंहः प्रतापसामन्तः स्व-भटैः सार्द्धं तमस्येव सहस्रशो यवनभटांश्छिन्दन् सूर्य-

मण्डलनिगमनानन्तरमेव तमपि विभिद्य परमं स्थानं गतवान्।

साम०—तद् दुर्गमभेद्यमिति श्रुतम्, तत्कथं मुक्तम्?

रुद्र०—तत्कातर्याद्भिया वा नैव मुक्तम्। किन्तु अभेद्यमेतद् दुर्गमिति मत्वा हताशाः सर्वे यवनसैनिका यदा परावर्तितुमुन्मुखा अभवंस्तदा अर्बुदेशो जलस्थानेषु विषप्रक्षेपणाय यवनसेनापतिं प्राबोधयत्, जलस्थानानि च व्यजिज्ञपत्।

साम०—देवराज! किमिदं जयचन्द्रानुकारिणा त्वया आर्यमर्यादाविनाशाय कारितम्?

रुद्र०—अनेन हतकेन तु ततोऽप्यधिकतरं कृतम्।

तद्वर्गीयसुतां हठाद् यदहरत्सोमेश्वरस्यात्मजो
यातस्तेन च कान्यकुब्जनृपतिः प्रात्यन्तिकं वैरतः।
हा किं देवल ते पितुः क्षितिपतिः शान्तः प्रतापोऽहरत्।
यत्त्वं वैरविधिं चरन् स्थितिपतिं हित्वाऽन्त्यजं प्राप्तवान् ॥११॥

साम०—ततस्ततः—

---

हतकेनेति। इदमाक्रोशसूचकं पदम्। मृतप्रायेणेत्यर्थः। तद्वर्गीयेति। सोमेश्वरस्यात्मजः-पृथ्वीराजः, यद्-यस्मात्कारणात् तद्वर्गीयसुता जयचन्द्रकुलसमुद्भूता सुता संयोगिता हठात् अहरत् तेन कारणेन वैरतः विरोधात्कान्यकुब्जनृपतिर्जयचन्द्रः प्रात्यन्तिकं म्लेच्छदेशोद्भवं गौरीमहम्मदं यातः। इदं यथाकथंचिद् तद्गमने सकारणम्। हा इति खेदे। हे देवल! देवद्रव्योपजीविन्! एतेन अधमत्वं तस्य सूच्यते। शान्तः हठात्पितृभ्रात्रादीनामनिच्छया कन्याहरणादिदोषरहितः क्षितिपतिः प्रतापः, ते तव पितुः किमहरत्। यद्यस्मात्कारणात्त्वं वैरविधिं चरन्सन् प्रतापेन सह वैरं कुर्वन्सन् स्थितिपतिं—मर्यादारक्षकं प्रतापं हित्वा—त्यक्त्वा अन्त्यजं शूद्रमकबरं प्राप्तवान्। ब्राह्मणस्य तव स्थितिपतेः समीपे एव गमनं युज्यते न तु शूद्रसमीपे इत्यर्थः। देवलानामस्पृश्यत्वं देवाराधकानां च पूज्यत्वमिति

रुद्र०—ततस्तद्विषेण शतशः संभावितयोद्धारो विनष्टाः । तृषितं पुत्रमित्रकलत्रभृत्यादिकं चावलोक्य साश्रुनयनः सोच्छ्वासं प्रतापोऽवदत् । हा दुर्दैव ! किमिदं ते दुर्विलसितम् । कथमत्र तृषिताः स्थातुं शक्नुमः । हा एते सहस्रयोधिनो योद्धारो विषेण विनष्टाः । सालुम्बाद्यस्तु न शोच्याः, यद् वीराणां रणे मरणं प्राकृतिकमेव । एते मदर्थमकारणमेव विनष्टा इति बहुतरमशुचत् ।

साम०—ततस्तत —

रुद्र०—ततः किमन्यत् । तदेव जातं यद्दुर्दैवविलसितमासीत् ।

गरलममृतमध्ये कृष्णचित्तोऽर्बुदेशो
यवनपतिसहायः क्षेपयामास सेर्ष्यः ।
नरपतिरथ हित्वा स्थानमेतत्प्रतापो
विपदि पदमनैषीदात्मधैर्यं बुभुत्सुः ॥ १२ ॥

---

अस्मत्कृतमन्दिरप्रवेशनिर्णये विशदीकृतम् । अहरदित्यस्य न कथितपदत्वम्, तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयकत्वात् । यदि स एवार्योऽमुषदित्यादिना प्रतिपाद्येत तदाऽन्योऽर्थ इव प्रतीयमानस्तत्प्रतीतिमेव स्थगयेत् । इह त्वभेदबोधनार्थं पुनरुक्तिरुत्कर्षावहैवेति दिक् ॥ ११ ॥

अथ प्रतापस्य विपत्तिं प्रदर्शयति—**गरलमिति** । कृष्णचित्त –कृष्णे चित्तं यस्य स कृष्णाराधक । यद्वा-कृष्ण पापाक्रान्तत्वात्कृष्णवर्ण चित्त यस्य स तथा। यवनपते सहाय –सहायभूत , सेर्ष्य –ईर्ष्यायुक्त , प्रतापस्य शिवोपासकत्वादकारणिकेर्ष्यासयुक्त अर्बुदेश —अर्बुददेशाधिपति अमृतमध्ये-जलमध्ये गरल-विष क्षेपयामास । विरुद्धवस्तुनो सङ्कर पापजनक , तत्रापि अमृते विषप्रक्षेपस्तु महापापजनक । अथ–गरलप्रक्षेपानन्तर, नरपति – प्रताप , एतत्स्थान हित्वा–परित्यज्य, आत्मधैर्यं बुभुत्सु –स्वकीयधैर्यं ज्ञातुमिच्छु , विपदि–विपत्तौ पदमनैषीत् । 'विपदि धैर्यमथाभ्युदये क्षमा' इति प्राकृतिकस्यात्मधैर्यस्य परीक्षणाय विपत्तौ पद निन्ये । अत. परं प्रतापोपरि विपत्तिरागच्छदिति भाव ॥ १२ ॥

ततः प्रतापस्तत्स्थानं हित्वा पुत्रकलत्रादींश्चन्दावत्सेनापते-
रक्षकत्वे सूर्यमलदुर्गे प्रेषयामास। स्वयं च चविन्दापर्वते
स्थितस्सन् भिल्लैः सार्धं पर्यटन्नितस्ततः प्राप्तान् यवन-
भटानवधीत्।

साम०—ततस्ततः—

रुद्र०—तदनन्तरं यवनपतिरित्याज्ञां प्रेषयामास। यदि प्रतापो
नैव गृह्यते तर्हि एतस्य पुत्रकलत्रे सुता वा गृह्णन्तु।
तद्ग्रहणे स्वयमेव संतप्तः समेष्यति।

साम०—आः! सर्वथा विरुद्धोऽयं मार्गोऽर्थाद्धृषु कलत्रबाल-
पुत्रादिष्वाक्रमः कथं तेनाङ्गीकृतः।

रुद्र०—येन केनापि प्रकारेण शत्रुं वशमानयेदेष एव तस्य मार्गः।

साम०—ततस्ततः—

रुद्र०—ततः कतिचिद्यवनभटाः प्रतापकलत्रादीनां स्थितिस्थानं
परिज्ञाय तद् रुरुधुः। अन्ये सर्वे तत्पर्वतमवरुध्य तथा
स्थिता आसन् येन प्रतापो नैव निःसरेत्।

साम०—ततस्ततः—

रुद्र०—ततो बहुकालमवरुद्धा भटाः प्रतापकलत्रादीनां रक्षो-
पायमपश्यन्तस्तानि रात्रौ भीमगढेऽनैषुः। तदनन्तरं
निश्चिन्तमयुध्यन्त। सहस्रशो यवनभटा विनष्टा,
अन्ततो दुर्गं यवनानां हस्तगतमभूत्।

साम०—ततस्ततः—

रुद्र०—ततो बहुतरसेनाविनाशेऽपि न किञ्चिदुपलब्धमिति
खिन्ना यवनसेना पुनः प्रतापकलत्रस्थानं परिज्ञाय
भीमगढं रुरोध। तत्रापि बहुकालपर्यन्तं तत्रत्या भटा
अयुध्यन्त। अथ निपतनासन्नं दुर्गमवलोक्य चतुर्दश-
वर्षीयं चन्दनसिंहं सेनापतिं नियुज्य तद्दुर्गाधिपतिः
प्रतापकलत्रादिकमन्यस्मिन्सुरक्षिते पर्वतेऽनयत्।

साम०—अतिकष्टतरमेवं स्थानात्स्थानान्तरगमनम् । हा दैव ! कियदधिकं प्रतापधैर्यपरीक्षणं कर्तव्यम् । मम तु चेतः श्रुत्वैवोद्विजते, अनुभवितुर्धैर्यमलौकिकमेव । ततस्ततः—

रुद्र०—तदनन्तरं तस्य बालस्य महाश्चर्यकरं युद्धमवलोक्य सर्वेऽपि भटास्तं प्रशशंसुः ।

> किं रामचन्द्रस्य सुतः कुशोऽयं
> किं वा लवो युद्धकलाप्रवीणः ।
> कि वाऽर्जुनिर्वीरवरोऽभिमन्यु—
> र्बालोऽपि यो हन्ति सुवीरसंघान् ॥ १३ ॥

साम०—युक्तमेव तस्य तादृशं शौर्यम् । प्रतापसैनिकेषु अष्टवर्षीयेष्वपि तादृगेव शौर्यमवलोक्यते ।

रुद्र०—तस्य मेवाडाधिपतेः प्रतापस्य चरणारविन्ददर्शनस्य शौर्यरसाप्लुतस्य वचसश्च प्रभावोऽयम् ।

साम०—एवमेवैतत् । ततस्ततः—

रुद्रः—तदनन्तरम्—

> गच्छत्येष समेति चैव निपतत्येष प्रयाति क्षणात्
> रुन्धे हन्ति निपातयत्यथ भटान्संमर्दयन्भ्राजते ।

---

किमिति । अय चतुर्दशवर्षीयश्चन्दनसिंह किं रामचन्द्रस्य सुत कुश ? कुशनामा रामचन्द्रस्य पुत्रोऽय किम् ? किं वा युद्धकलाया प्रवीण लव ? लवनामा रामचन्द्रस्य पुत्रोऽय किम् ? किंवा वीरेषु शूरभटेषु वर श्रेष्ठोऽर्जुनिरर्जुनपुत्रोऽभिमन्युरस्ति ? बालोऽपि बाल्यावस्थापन्नोऽपि य सुवीरसघान् उत्तमवीरसमूहान् हन्ति । कुशलवाभिमन्यवोऽपि बाला एव तथाभूता आसन्नयमपि तथेति भाव ॥ १३ ॥

य विलोक्य भयत्रस्ता यवनभटा कथयन्ति—**गच्छत्येष** इति । एष गच्छति-अन्य मारयितु याति, अह तावन्मुक्तोऽस्मि । एष समेति, ममोपर्येव समागच्छतीत्यर्थ । एष निपतति—ममोपरि निपतितो भवतीत्यर्थ । एष क्षणात्प्रयाति—मा हत्वा क्षणमात्रेण गच्छति । अत्र 'एष' शब्दो देहलीदीपकन्यायेनोभयत्र संब-

यश्चाग्रे प्रगत स एव विगतो यातो द्विषन्मण्डले
यच्छौर्यं स्तुवते द्विषोऽपि तमहो कश्चिन्निलीयाच्छिनत्॥१४

साम०—किमीदृगेव यवनानां शौर्यम् ?

रुद्रः—अथ किम् । सालुम्बोऽप्येवमेव निहतः, यतः शक्ति सिंहोऽकबराद्विरुद्धो यातः ।

साम०— ततस्ततः—

रुद्र०—ततः क्रमशो वनपर्वतकन्दरादुर्गाधित्यकोपत्यकादिषु यवनैराधिकृतेषु भिल्लभटसुरक्षितकलत्रपुत्रकन्यकोपेत-श्चन्दावदादिप्रधानभटैस्सहित प्रतापो मृगवृकवराह-शार्दूलमर्कटश्रृगालखड्गमार्जारगवयशल्यसंकुलं भृङ्ग-तन्तुवायवृश्चिकभुजङ्गपिपीलिकाशतपदकर्णशलाकिका-गौधेरदंशमधुमक्षिकाविषस्तूपिकादिव्याप्तं पीलुपलाश-पिप्पलप्लक्षपर्पटीप्रियालुपट्टीपुष्पाप्रियकपिच्छिलापूतिक-पाटलाप्रियङ्गुपिचुमन्दसघनं काकोलूककपोतकुक्कुट-चटकखञ्जरीटबककोकिलरथाङ्गकुररमयूरत्तित्तिरि-

---

ध्यते । एष रुन्धे-पलायितुमपि नावकाश ददाति । रुद्ध्वा किं करोतीत्याह । हन्ति–मारयति, निपातयति–अव पातयति । अथ भटान् योद्धॄन् समर्दयन् भ्राजते । किंबहुना द्विषन्मण्डले–शत्रुसमूहे यश्चाग्रे प्रगत प्राप्त स एव विगतो विनष्टो यात । यस्य शौर्यं द्विष -शत्रवोऽपि स्तुवते-साधुबुद्ध्या प्रश-सन्ति । तं कश्चिद् यवनभट निलीय-अन्तर्हितो भूत्वा अच्छिनत् पश्चादेव द्विधाचकार, अहो इत्याश्चर्ये, ईदृक् प्रकारेणापि यवनाना युद्धकरणमिति-निन्दाप्रदर्शकमाश्चर्यम् ॥ १४ ॥

**मृगे**ति । अत्र मृगादय , स्वच्छन्दगते परिपन्थिन , सर्वेऽपि नामत सुगमत्वान्न व्याख्यायन्ते । भृङ्गादयो यथास्थानस्थितावपि दशनादिना दु ख-जनका । वृश्चिकसर्पादयो भूशयने दशने दु खजनका प्राणघातकाश्च । पील्वादय क्षुद्रफलजनका. । पिचुमन्दो निम्ब । तथा कालोलूकादिदुष्ट-पक्षिगणसयुतम् । आरण्यक. कुक्कुटो भक्ष्य । तित्तिरिकपोतौ देशव्यव-

चकोरवर्तकादिविविधपक्षिगणसंयुतं जावराप्रान्तीयपर्वतारण्यं प्रविवेश। प्रविशन्तं तं विहाय अहमकबरवृत्तपरिज्ञानाय आगरानगरं गतवानासम् ।

**सामo**—एहि । आवां गत्वा प्रतापमुद्बोधयिष्यावः ।

( इति वदन्तौ वने प्रविष्टौ । ) ( पटीक्षेप । )

(इत स्वातन्त्र्यदेवताराधनार्थं भ्राम्यन् शिलातले निषण्ण प्रतापो विधेर्दुर्विलसित पत्न्या साहसहिष्णुतादिगुण पुत्रस्य सुतायाश्च कष्ट विचारयन् किमपि शोचते । तदन्तरा एव सुताया कुतोऽपि भयत्रासस्वरसमिश्रित चीत्कारशब्द शृणोति । )

**प्रतापः**—( खड्गमाकृष्य धावति । )

रे नीच ! तिष्ठ शमनालयमानये त्वां
क्वैष प्रयास्यसि दृशोर्विषयागतस्त्वम् ।
शक्रोऽपि रक्षितुमथ क्षमते न च त्वां
नैवासि चेच्छ्रुतिभवात्समयादवध्यः ॥ १५ ॥

(किंचिद्गत्वा आकृष्टखड्गस्तिष्ठन्विलोकते ।) आः! विडालोऽस्याः करपट्टिकामपाहरत् । ततोऽतिक्षुधिता रोदिति । एत-

---

स्थय। भक्ष्याभक्ष्यौ । अन्ये अभक्ष्या । एतेन तस्यारण्यस्य शयनासनचङ्क्रमणादिप्रतिबन्धकत्व भोजनानुपलब्धेश्च दु खजनकत्व सूच्यते । एव महादु खकारकेऽपि तस्मिन्नरण्ये प्रविवेश ।

रे इति । रे नीच ! अस्मत्सुतादु खदायिन् ! तिष्ठ, त्वा शमनस्य—यमराजस्य आलय गृहम् आनये । त्वा हत्वा यमगृहं प्रेषयामीत्यर्थः । एष त्व दृशो प्रत्यासत्त्या मम दृशोर्विषयागत , मम दृष्टिगोचरीभूत सन् क्व प्रयास्यसि ? अथ मद्दृष्टिविषयागमनानन्तर त्वा शक्रोऽपि-देवाधिदेवोऽपि रक्षितु न च क्षमते-नैव समर्थो भवति अन्यस्य कथैव का, चेत्—यदि श्रुतिभवात्समयात्-शास्त्रमर्यादोपगताद् व्यवहारादवध्यो नैवासि । अवध्यत्वे एव मुक्तो भविष्यसि नान्यथेत्यर्थ ॥ १५ ॥

दवलोक्य प्रतापोऽपि दैवदुर्विलसितं निन्दन् ऊर्ध्व-मुच्छ्वसन् ब्रवीति–हा दैव ! ब्राह्मणभक्तिपरायणस्य हीनदीनदुःखनिवारकस्य ममापि शिशवः क्षुधया रुदन्ति । हा भारतवसुंधरे ! सर्वतः सस्यसंपूरितायामपि त्वयि मदीयसुता अन्नेन विना खिद्यन्ते । किं करोमि. वृथैवाडम्बरोऽयम् । कि तावत्सान्धिमेवाभ्यर्थयेय (इति विमृशन्नुपविशति । अथ क्षुधार्ता सा बालिका पितुरुत्सङ्गे निपत्य 'पित ! मे करपट्टिका देहि' इति कथयन्ती रोदिति । प्रतापोऽपि अधीर इव तिष्ठति ।)

प्रतापः—( मनसि )

सालुम्बे निहितेऽप्यभिन्नहृदये मन्नासखे स्वर्गते
युद्धे चापि पराजये प्रतिदिनं भ्रान्तेऽद्रिकान्तारयोः ।

---

हा दैवेति । ब्राह्मणभक्तिपरायणस्य ब्राह्मणभक्तिमुद्भूतज्ञाताज्ञातसकलपापविशुद्धिद्वारा दुःखशोकाद्यभाजनस्य, हीनदीनदुःखनिवारकस्य, यो हि हीनानां–दुर्बलानां दीनानां–भोजनवस्त्रपात्राद्यभावेन दुःखितानां दुःखं निवारयति तस्येश्वरः स्वयमेव दुःखं निवारयतीति परमात्मना दुःखनिवारयितुं योग्यस्य, ममापि पूर्वोक्तविशेषणद्वयविशिष्टस्य मम तु नैवैतद् दुःखस्थानं भवितुमुचितमिति भावः । शिशवः बालकाः क्षुधया रुदन्ति । स्वल्पेनैव अन्नेन फलादिना वा येषां क्षुधा निवर्तते ते रुदन्ति । एतेनेदानीं स्वल्पमप्यन्नं नैवोपलभ्यते इति सर्वथा अन्नदौर्लभ्यं सूचितं भवति । **विमृशन्निति** । एतेन सन्धिकरणस्य अङ्कुरोद्भवः सूचितो भवति । सुतायाः क्षुधया तथाभूतनिपतनाद्यवलोक्य अधीर इव संजातः । एतेन सन्धिकरणविचारस्य पल्लवितत्वं सूच्यते ।

अथ मनसि यत्प्रतापो विचारयति तद्दर्शयति—**सालुम्बे** इति । सालुम्बाख्ये पितृस्थानीये धीरवीरसामन्ते निहतेऽपि–संग्रामे मृतेऽपि । अभिन्नहृदये–अपृथग्भूतमनस्के मन्नासखे–मन्नासिंहनामकमित्रे स्वर्गते तस्मिन्नपि मृते इत्यर्थः । युद्धे–संग्रामे पराजये चापि, प्रतिदिनम्–दिनं दिनं

किं चान्यत्क्षुधितेऽप्यनेकदिवसं धैर्य्यं न यत्कम्पितं
खिन्नां स्वामबला सुतां च रुदतीं दृष्ट्वाऽद्य तल्लीयते॥१६॥

प्रता० — भद्रे ! मा रोदीः, आनयामि ते करपट्टिकाम् (इत्याश्वासयति)

( अथ सा बाला पितुरुत्सङ्गादुत्थाय मातुरङ्के निपत्य-मात ! क्षुधितास्मि देहि मे करपट्टिकामिति कथयन्ती पुनरुच्चस्वरेण रोदिति । )

प्रतापपत्नी—कन्यके ! मा रोदीः । दास्यामि ते करपट्टिकाम् ।

( इति कथयन्ती परिलालयति )

प्रता०—( मनसि )

स्वाङ्के निधाय रुदतीं परिलालयन्तीं
दृष्ट्वाऽथ रोदिति स रोदयते च सर्वान् ।
वृक्षा विहङ्गमगणाः पशवो विलोक्य
क्रीडां विहाय विलपन्ति वनोद्भवाश्च ॥ १७ ॥

---

प्रति इति प्रतिदिन प्रत्येकदिनमित्यर्थ । अद्रिकान्तारयो पर्वतारण्ययोर्मध्ये भ्रान्ते स्थानात्स्थानान्तर गमने कृते सति, किञ्चान्यत्, अन्यत्किमधिक कथयेयम्, अनेकदिवस-नैरन्तर्येण अनेकदिवसपर्यन्तम् । 'कालाध्वनोरत्यन्तसयोगे' इति द्वितीया । क्षुधितेऽपि क्षुधया पीडितेऽपि-मयि । यद् धैर्य न कम्पितम्-अणुमात्रमपि न चलितम्, किन्तु पर्वतवत्स्थिरमासीत्तद् धैर्यम् अद्य खिन्ना-खेदयुक्ता, स्वा-स्वकीयामबला स्त्रिय रुदतीं सुता कन्यका च दृष्ट्वा लीयते-सर्वथा विनश्यति । तथाभूतदशाया यदणुमात्रमपि न कम्पित तदेव सर्वथा इदानीं विनश्यतीति पूर्वदु खापेक्षया इदानींतनदु खस्याधिकतरत्व सूचित भवति ॥ १६ ॥

प्रताप उच्चस्वरेण रुदत्या कन्यकाया परिलालन कुर्वतीं स्त्रियमवलोक्य यत्करोति तद्दर्शयति—**स्वाङ्क** इति । रुदतीं पूर्वप्रकरणात प्राप्ता कन्यका स्वाङ्के—स्वकीयोत्सङ्गे निधाय-स्थापयित्वा परिलालयन्तीं—विविधप्रलोभनादिना प्रसादयन्तीं स्वस्त्रिय दृष्ट्वा प्रताप रोदिति । अथ रोदनसमनन्तरमेव स प्रताप सर्वान् तत्रस्थितान्स्वकीयसहायकभिल्लादीन् रोदयते च । एतेन सन्निकरणसमये सर्वेषा दु खोद्रेकाप्रतिबन्ध्यभाव सूचितो भवति । अथ तत्रत्योद्भिजतिर्यगादीना कृत्यमाह—**वृक्षा** स्थावरा

(प्रकाशम्)-आः पश्य। मद्दुःखसहानुभूत्या एते उद्भिजतिर्यगादयो वनदेवताश्च विलपन्ति। (किञ्चिद्धैर्यमवलम्ब्य)।

मिथ्याभिमानविधिना समुपार्जितं किम्
कान्तारदुःखसहनेन समागतं किम्।
ताम्यन्तमद्य विपिने स्वकुटुम्बवर्गं
शक्तो न रक्षितुमतश्च करोमि सन्धिम् ॥१८॥

(इति विमृश्य कन्यकामवलोक्य ब्रवीति।) कन्यके! मा रोदीः, आनयामि ते करपट्टिकाम्। नातः परं ते दुःखं भविष्यति। (इत्युक्त्वा मसीं पत्रं चानाय्य सन्धिपत्रं लिखति। लिखित्वा स्वयं वाचयति।)

दुःखादुद्विग्नचित्तः क्षुधितनिजसुतां क्षीणकायं कलत्रं
दृष्ट्वोद्भ्रान्तः स्वरक्षाविधिमखिलमयं नैव कर्तुं समर्थः।

---

उद्भिजादय, विहङ्गमगणा अण्डजा पक्षिसमूहाः, पशवो हरिणादय विलोक्य विलपन्ति–ततोऽप्यधिकतर रुदन्ति। क्रीडा विहाय–स्वानन्द दायिका क्रीडा परित्यज्य वनोद्भवा–वनजाता ऋष्यादयो वनदेवता वा विलपन्ति–सातिशय रुदन्ति ॥ १७ ॥

प्रताप किंचिद्धैर्यमवलम्ब्य विचारयति—**मिथ्येति**। मिथ्या योऽभिमानविधिस्तेन, व्यर्थमेवाहकारकरणेन किं समुपार्जितम्–किमर्जितम्? न किमपीत्यर्थ, व्यर्थमेवाभिमानविधान मे जातम्। तथा कान्तारे-महारण्ये दुर्गमे वर्त्मनि वा दुःखसहनेन किं समागतम् किमुपलब्ध? न किमपीत्यर्थ तदपि व्यर्थमेव जातम्। अद्य विपिने–अरण्ये ताम्यन्त दुःखमनुभवन्त स्वकुटुम्बवर्गं-पुत्रकलत्रादिक रक्षितु-पालयितु न शक्त, न समर्थोऽस्मि। अतश्च-अस्माच्च कारणात्, पूर्वोक्तकारणद्वयादनेन तृतीयेन च कारणेन सन्धिं करोमि। अद्यैव अकबरेण सह सन्धिं करिष्यामि। वर्तमानसामीप्याद्भविष्यदर्थे लट् ॥ १८ ॥

अथ प्रताप सन्धिपत्र लिखित्वा वाचयति। **दुःखादिति**। दुःखाद् वनाद् वनान्तरे भ्रमणादिना उद्विग्न चित्तं यस्य स. तथा, एतेन सन्धिपत्र-

तस्माद् युद्धाद्विरक्त. शमय रणकथां ज्ञायतां वृत्तमेतत्
साँगापौत्र' प्रतापो यवनपतिपदे याचते सन्धिचर्चाम् ॥ १६ ॥

( इनि गुहाय भिल्लराजाय पत्र ददाति। स पत्र गृहीत्वा निष्क्रान्त )
प्रताप कुटुम्बेन सह परिक्रामन् वने प्रविष्ट । ) ( पटीक्षेप । )

---

स्याप्रामाण्य सूचित भवति । उद्विग्नचेतसा क्रियमाण कार्यमप्रामाणिकं भवतीति सिद्धान्तात्। तथा क्षुधिता-बुभुक्षिता चासौ निजसुता-आत्मदुहिता ता, क्षीण कायो यस्य तत्कलत्र स्त्रिय दृष्ट्वा उद्भ्रान्तश्च कर्तव्याकर्तव्यज्ञानशून्य अकर्तव्येऽपि कर्तव्यतामापन्न इत्यर्थ । एतेनापि सन्धेरप्रामाण्यं सूचित भवति। उद्भ्रान्तावस्थाया क्रियमाण कार्यं न प्रमाण भवतीति नियमात्। एव च उद्भ्रान्तोऽयं प्रताप अखिल–पूर्णरूपेण रक्षाविधिं कर्तुं नैव समर्थ, पुत्रकलत्रादीनामात्मनश्च रक्षा कर्तुं नैव समर्थ इत्यर्थ । यद्वा—अखिलं रक्षाविधिं—समस्तभारतस्य रक्षाविधिं कर्तुं नैव समर्थ, कष्ट बाहुल्यात् अतिदु खेन प्राप्यमाणे वस्तुनि वैराग्याच्चेदानीमुत्साहाभावाच्च समर्थोऽस्मीति भाव । तस्मात्कारणाद् युद्धाद्विरक्तोऽस्मि। यद्वा—त्व युद्धाद्विरक्त सन् रणकथा—सग्रामवार्ता शमय। भवद्भिरेतद्वृत्त ज्ञायताम्। साँगापौत्र साँगा स्वनामप्रसिद्धो वीर, येन आमरण स्वातन्त्र्य विहाय त्वत्पूर्वजै सह सन्धिप्रार्थन न कृत, तस्य पौत्र प्रताप, एतेन त्वत्पूर्वजैरनिष्पादित कार्य्यं त्वया निष्पादित भविष्यतीति सन्धेर्महत्त्व सूचित भवति। यवनपति पदे आदरसूचनार्थमन्ते 'पद'पदप्रयोग । अकबरादिति पञ्चम्यर्थे 'अकथितं च' इति द्वितीया। सन्धिचर्चां—सन्धिविषयकविचार याचते। यद्वा—यवनपतेर्यत्पदं स्थान तद्विषये। आगरापत्तनपर्यन्त यदि मह्य राज्य दद्यास्तदा नाहमुपद्रोष्यामि। यद्वा—हे यवन ! पतिपदे स्वतन्त्रतया अस्मत्स्वामित्वस्वीकारेण मयि राजपदप्रयोगे अहं स्वतन्त्र एव राजा इति भवत स्वीकृतौ सन्धिचर्चां याचते। यदि मा स्वतन्त्र राजान स्वीकरोषि तदा नाह त्वद्राज्यं आक्रमिष्यामीति भाव । यद्वा—हे यवन ! पतिपदे—स्वामित्वविषयकस्थाने, कियत्पर्यन्तं ते आधिपत्य कियत्पर्यन्त च मे आधिपत्यमिति सीमानिर्धारणे इत्यर्थ, सन्धिचर्चां याचते ॥ १६ ॥

( इत प्रतापानुचर· पत्रं गृहीत्वा आगरानगरे राजसभाया दौवारिकेण सह प्रविश्य अकबरहस्ते पत्र समर्पयति । अकबरश्च वाचयित्वा सर्वान् श्रावयति । )

**अकबरः—मृदङ्गपहटशुषिरमर्दलवल्लकीवादित्रातोद्यसंमिश्रिततताविततन्त्रीतलतालत्रुटितम् ऋषभगान्धारधैवतषड्जादिशब्दसंपूरितं ध्रुपददीपकमलारभैरवभैरवीप्रभातिकाशावरीवरवादिविविधरागसंमिश्रितं गानं मेवाडविजयमहोत्सवे आचर्यताम्।** (इत्याज्ञापयति।)

( अत्रान्तरे प्रतापपक्षपाती पृथ्वीसिंहो महोत्सवान्तरायभूत समुपतिष्ठते । )

**पृथ्वी०—महाराज ! कस्यायं महोत्सव ?**

**अक०—**( पत्र दत्त्वा पृथ्वीसिंहेन वाचयति । )

**पृथ्वी०—मायिकमेतत् । भवत· क्षणिकसंतोषार्थं तद्वैरिणा केनापि रचितम् ।**

**अक०—तर्हि पुनः पत्रं लिखित्वा प्रत्येतु भवान्, तदनुचरश्च तावदारक्षकरक्षितस्तिष्ठतु ।**

**पृथ्वी०—एवं भवतु को दोषः** (इति तथा करोति।) (श्लेषेण तमुद्बोधयन्पत्र लिखति । )

**आश्लेषपूर्वं वदतोऽपि चित्तं**
**न निर्णयं मे समुपैति कश्चित् ।**

---

**मायिक**मिति । मायया कपटेन निर्मितम् । **क्षणिकसंतोषार्थ**मिति । यावत्पर्यन्तं वास्तविकतया वस्तुस्थितेः परिज्ञान न भवति तावत्पर्यन्तमेव सतोषार्थम् । प्रताप सन्धि प्रार्थयते इति कृत्वा तव प्रसादार्थं केनापि अनिर्दिष्टनाम्ना तद्वैरिणा यतस्तस्याकीर्ति स्यात्प्रताप पराजित , प्रतापोऽपि मानसिंहादिवदधीनता स्वीकरोतीत्ययश प्रस्ताराय रचितम् । **श्लेषेण** इति । भङ्गश्लेषेणेत्यर्थ । अभङ्गश्लेषेणोच्यमान झटित्येव बुद्धौ प्रतिभासते । त-प्रतापम् । किं लिखतीति दर्शयति–

अथ स्वाभिप्राय सूचयन् स्फुटं सन्धिनिषेधाय प्रेरयति—**आश्लेषे-**

सन्धौ विरुद्धस्य दलं नु किंवा
तवेति नो वाक्यमथोत्तरेस्त्वम् ॥ २० ॥
सन्धावपूर्वत्रिदशानुभूतिः
कान्तो यशोऽङ्के कमलानुगन्धः।
अमध्यमं भास्करमेव मत्वा
द्रक्ष्यन्ति लोकाश्च सविस्मयं त्वाम् ॥ २१ ॥

---

ति। आश्लेष —आलिङ्गन तदेव पूर्व यत्र। आलिङ्गनपूर्वं यथा स्यात्तथा, अन्यत्र भङ्गश्लेषपूर्वं वदत -कथञ्चतोऽपि मे-मम चित्त कश्चिन्निर्णयं न समुपैति। किञ्चिदपि न निश्चिनोतीत्यर्थ । अथ पद्यद्वय दर्शयति—सन्धौ—सन्धिविषये विरुद्धस्य कस्यचित्तव विपक्षिणो दल—पत्र नु। नु इति वितर्के। केन चित्तव वैरिणा त्वन्नाम्ना मायया निर्मित किम्? किं वा अथ वा। तव इति नः अस्माक वाक्यम्। अथ त्वम् उत्तरे । निषेधप्रेरणापक्षे। सन्धौ विरुद्धस्य दल नु किं वा तव, इति प्रश्न । अथ सदेहदशाया त्व नो नैव इति वाक्यमुत्तरे । ममैतत्पत्र नैवास्तीति त्वमुत्तरयेति भाव ॥ २० ॥

**सन्धा**विति। सन्धौ—अकबरेण सह सन्धिकरणे अपूर्वा—पूर्वमननुभूता त्रिदशाना—देवसुखानामनुभूति । यद्वा—अपूर्वा त्रिदशाना—तिस्रो दशा येषा ते त्रिदशा देवास्तेषामनुभूतिरनुभव , देवादीनामिव सर्वदा सुखमेव भविष्यतीत्यर्थ । पक्षे-अपूर्व , नास्ति पूर्वो वर्णो यत्रेति अपूर्व एवभूतो यस्त्रिदशाशब्द , त्रिदशाशब्दे पूर्ववर्णस्य 'त्रि' इत्यस्याभावे दशा इत्यवशिष्यते। ततश्च दशाया अशुभग्रहादिदशाया अनुभूतिरनुभवो भविष्यति। दशाशब्दोऽशुभदशाया रूढ । तथा कान्तो—मनोहरो यशोऽङ्के—ते यशोऽवयवे कमलाना कमलपुष्पाणामनुगन्ध , सन्धिकरणानन्तरं कमलपुष्पाणा सुगन्धिरिव ते यशोऽवयवे सुगन्धिर्भविष्यति । तव यशस प्रसिद्धि प्रतिष्ठा च भविष्यति। पक्षे—कान्त कस्य—क इत्यक्षरस्य अन्तो—नाशो यत्रेति । कमलानुगन्ध इत्यत्र ककारस्याभावे मलानुगन्ध इत्यवशिष्यते । ततश्च ते यशोऽङ्के मलानुगन्ध -मलस्य अनुगन्धो भविष्यति । दयादाक्षिण्यादिविषये यशस शोभनत्वेऽपि सन्ध्यशे कातरतासूचनात् यशस एकदेशे मलानु-

कि किर्मीरचरित्रचित्रितविधिं नौरोजमालोकितुं
चेतो धावति तेऽपि चिन्तितपदस्थाने प्रतिष्ठास्थितेः ।
पृच्छामः किमु गौरवं तव कृतौ कि चिद्वहाम स्वके
स्वान्ते वा त्रपयाऽवनम्रशिरसस्तिष्ठाम संसद्गताः ॥ २२ ॥

---

गन्धो जायमान सर्वमपि ते यशो दूषयिष्यतीति भाव । तथा लोका अमध्यम मध्यकालानुत्पन्नम् । मध्यकालिकसूर्यस्य दर्शनायोगात् प्राभातिक भास्करमेव साक्षात्सूर्यमेव मत्वा तेज प्रभावातिशययुक्तत्वात्सूर्य एवायमिति मत्वा सविस्मय साश्चर्य यथा स्यात्तथा त्वा द्रक्ष्यन्ति अवलोकयिष्यन्ते। पक्षे 'अमध्यमम्' नास्ति मध्यमो मध्ये जायमानो वर्णो यत्रेति अमध्यमम्। मध्यवर्णरहित भास्करम् भास्करमिह मध्यवर्णस्याभावे भारमित्यवशिष्यते। ततश्च भारमेव मत्वा त्व पृथिव्या भार एव सजातो यवनस्याधीनतास्वीकारादित्यादि मत्वा लोकास्त्वा सविस्मय साश्चर्यम्। कथमय सागापौत्र प्रभावशाली वीर कातर. सजात इत्यतर्कितत्वात्सविस्मय द्रक्ष्यन्ति ॥ २१ ॥

तव पत्र नैवास्तीति त्वद्गौरवान्मयोक्तमिति सूचयन्सन्धिस्वीकारे इहागमने पापोपार्जनमप्रतिष्ठा चेति व्यङ्ग्यश्लेषाभ्या सूचयति—**किं किर्मीरे** ति। किर्मीर-भोगविलासपापमिश्रितत्वात्कर्बुर यच्चरित्र तेन चित्रितो-विचित्रवर्णोपेतो विधिर्विधान यस्य यस्मिन्वा तम्, नौरोज-नौरोजनामक विपणिं मीनाबाजार इति लोके। नौरोज इति डित्थकपित्थादिवद् रूढिशब्द । आलोकितु-द्रष्टु चिन्तितपदस्थाने-अभिमतपदस्थाने प्रतिष्ठया-सम्मानेन स्थितिर्यस्य स तस्य। पक्षे-चिन्ता सजाता यस्मिन्निति चिन्तित, तच्च तत्पद चिन्तितपदम्, तत्र स्थाने । चिन्तायुक्ताविकारस्थाने अप्रतिष्ठया स्थितिर्यस्य स तस्य। अप्रतिष्ठापूर्वक विद्यमानस्य तेऽपि तवापि एव दशामापन्नस्यापीत्यर्थ तव चेत धावति । इह सर्वेऽपि अप्रतिष्ठयैव स्थिता इति तवागमने त्वमप्यप्रतिष्ठया स्थास्यसीति व्यज्यते। वय पृच्छाम । तव कृतौ प्रताप स्वाभिमानी वीरो नाय सन्धि प्रार्थयते इति तव कार्ये स्वके स्वान्ते आत्मचित्ते किंचिद्गौरव वहाम धारयाम किमु। वा-अथवा संसद्गता - अकबरपर्षदि प्राप्ता त्रपया-लज्जया, अवनम्राणि-किंचिन्नम्रीभूतानि, शिरासि

लीलासंमीलितेन्दुं तुहिनहिमगिरिक्षीरताराब्जकान्त-
ज्योत्स्नानागेन्द्रशङ्खार्जुनकुसुमसुधाजाह्नवीर्निह्नुवानाम् ।
ऊर्ध्वाधोमध्यभागे निखिलबुधजनै स्तूयमाना स्वकीर्तिं
हित्वा किं विग्रहार्थं त्रिदशसुखमनादृत्य यास्यात्मनाशम् ॥ २३ ॥

( इति पत्रं लिखित्वा सर्वान्श्रावयति । सर्वसमक्षं सन्धिसमर्थकमर्थं विधाय विश्वस्तेन स्वकीयानुचरेण राजचारैस्सह प्रतापसमीपं प्रेषयति । ततो निष्क्रमितुं परिक्रामन्ति सर्वे । ) ( पटीक्षेपः )

---

मस्तकानि येषां ते तथाभूतास्सन्तस्तिष्ठाम । मया अन्यथा ज्ञातं न तथाभूतो वीरः प्रतापः इति स्वपक्षपराजयाल्लज्जयाऽवनतमस्तकास्तिष्ठाम । सम्प्रश्ने लोट् ॥ २२ ॥

पुनस्तस्य कीर्तिप्रलोभनेन श्लेषेण सन्धिं निषेवयति—लीलेति । लीलया-अनायासेन समीलित-आच्छादित इन्दुश्चन्द्रो यया ताम् । यदीय-धवलिम्ना सर्वमेव धवलं जातमिति चन्द्रो नावगम्यते । तथा तुहिन-तुषारः, हिमगिरिः—हिमाचलः, क्षीर-दुग्धं, तारा—नक्षत्राणि,अब्जकान्त—शुभ्रवर्णो मणिः,ज्योत्स्ना—चन्द्रिका, नागेन्द्रः-शेषः ऐरावतो वा ।शङ्खः प्रसिद्धः, अर्जुनः अर्जुनवृक्षः, स च कविसमये शुभ्रवर्णतया प्रसिद्धः, कुसुमानि—पुष्पाणि, एतानि कविसमये शुभ्रवर्णान्येव । सुधा—शुभ्रवर्णं लेपनद्रव्यम् अमृतं वा । जाह्नवी—गङ्गा, एतेषां द्वन्द्वे द्वितीयाबहुत्वे । ताः निह्नुवानामपनयन्तीम्, ऊर्ध्वाधोमध्यभागे त्रिभुवने, निखिला—समस्ता ये बुधजना—विद्वज्जनास्तैः स्तूयमानां स्वकीर्तिं हित्वा—परित्यज्य त्रिदशसुखमनादृत्य देवसुखं परिभूय विग्रहार्थं—विग्रहाय आत्मनाशं किं यासि किमर्थमात्मानं नाशयसि । तस्माद्विरोधो नैव कर्तव्यः, विरोधकरणे तव नाशो भविष्यतीति भावः । पक्षे विग्रहार्थं शरीरार्थं क्षणभङ्गुरशरीरसुखार्थमात्मनाशं किं यासि, शरीर-रक्षार्थं क्रियमाणे सन्धौ पूर्वोक्तगुणविशिष्टायास्तव कीर्तेः नाशो भविष्यति कीर्तिनाशे आत्मनाशः स्वत एव सिध्यति । सङ्ग्रामे मरणे स्वर्गप्राप्तेस्त्रिदश-सुखप्राप्तिर्भविष्यति । ‘ हतो वा प्राप्स्यसि स्वर्गम् ’ इति संग्रामे मृतस्य स्वर्गप्राप्तिर्भवतीति भगवता गीतायामुक्तम् ॥ २३ ॥

( इतश्चोद्विग्न शिलातले निषण्ण प्रतापश्चन्दावदिन्दोर-(इन्द्रपुर-) सामन्तसमन्वितश्चिन्तयति । )

**प्रता०—अहो क्षणिकसुखलिप्सया मया महदनुचितमाचरितम् ।**

**सन्धिप्रार्थनया सर्वं नाशितं सुमहद् यशः ।**

**आः ! स्वहस्तेन पदयोः पातिता दास्यश्रृङ्खला ॥२४॥**

( इति सोद्वेगमुच्छ्वसिति )

**चन्दावत्—महाराज ! कुतोऽयमुद्वेगः, प्रतीक्षस्व तावत्किमयं सन्धौ कथयति ।**

**प्रता०—ममाभिमतानुरूपसन्धिस्वीकारेऽपि महदेव कष्टम् ।**

**सन्धौ समेतं नतकन्धराङ्गं**
**निरुद्धवीर्याहिमिवोच्छ्वसन्तम् ।**
**विलोक्य मां मानसमानभावा**
**सभागता. स्मेरमुखा भवेयुः ॥ २५ ॥**

---

अथ स्वयमुद्बुद्ध प्रताप सन्धिप्रार्थनमनुचितं मन्यमान कथयति—**सन्धी**ति । मया सन्धे प्रार्थना तया सन्धिप्रार्थनया सर्वमशेषं सुमहत् शोभन विपुल यश नाशितम् , सुमहदित्यसमस्तमेव । आ इति महाखेदे । महादु खम् स्वहस्तेन पदयोरात्मन पदयोर्मध्ये दास्यश्रृङ्खला—दासताया श्रृङ्खला पातिता ॥ २४ ॥

स्वाभिमतसन्धिस्वीकारेऽपि कष्टमेवेति दर्शयति—**सन्धावि**ति । सन्धौ—सन्धिविषये, समेतं-प्राप्तम्—अकबरपर्षदि यातम् । अत एव नत—नम्रीभूत कन्धराङ्ग यस्य स तम् । सन्धिप्रार्थनया सन्धिकरणार्थं गतमिति लज्जावनतमुखम् । अत्यधिकनम्रताया कन्धरप्रदेशादवनत भवति । निरुद्ध वीर्य पराक्रमो यस्य स , तथाभूतश्चासौ अहि –सर्पस्तमिव उच्छ्वसन्तम्, रुद्धपराक्रमसर्पवद्दीर्घोच्छ्वास कुर्वन्तं मां विलोक्य—दृष्ट्वा सभागता –सभाया प्राप्ता मानेन—मानसिंहेन समानो भावो येषा ते तथा मानसिंहवन्मम परिपन्थिन , अथवा—मानसे-मनसि मानभावो येषा ते तथा । येषा हृदये मम संमानमस्ति । अथवा माने—मानविषये समानभावो येषा ते । यथा वय-

एतदनादरसहनान्मरणमेव श्रेयः ( इति महतो दु खात्पुनरुच्छ्वसिति )

इन्दोरसामन्तः – महाराज ! अलमावेगेन ।

यावद्भीमभुजाविमर्दितगजाः संग्रामनिष्णातकाः
हस्तोद्धूतनिशातखङ्गनिहतत्वद्वैरिवीरव्रजाः ।
जीवामो वयमत्र सन्धिकरणं तावन्न ते शोभनं
सन्ध्यर्थं निपतिष्यति स्वयमसौ म्लेच्छाधिपस्त्वत्पदे ॥२६॥

प्रता०—कुतोऽस्यावसर. ? मया च सन्धिप्रार्थनं कृतमेव ।

चन्दा०—महाराज ! अलं विचारेण ।

क्षणेनैव विधास्याम. सन्धे. सोपधिदूषणम् ।
रक्षणारक्षणे तस्य त्वदधीने च केवलम् ॥ २७ ॥

---

मपमानितास्तिष्ठामस्तथा अयमपि मम समान एव जात इति मानसमानभावा स्मेरमुखा -स्मेरमीषद्धास्ययुक्त मुख येषा ते तथाभूता भवेयु —भविष्यन्ति । सभावनाया लिङ् ॥ २५ ॥

इन्दोरसामन्त प्रतापस्यावेग परिहरन्सूचयति—**यावदिति** । भीमभुजाभि अतिशयितबलयुक्तत्वाद्भयावहाभि भुजाभिर्बाहुभिर्विमर्दिता—वित्रासिता गज.—हस्तिनो यैस्ते तथा हस्तिनामपि वित्रासका , तथा सग्रामे निष्णातका -सदैव सग्रामतत्परा । तथा हस्तै उद्धूता ऊर्ध्वमुत्थाप्य कम्पिता ये निशातखड्गास्तीक्ष्णकरवालास्तैर्निहता विनाशितास्त्वद्वैरिवीराणा व्रजा —समूहा यैस्ते । एवंभूता वयमस्मदादयो यावज्जीवामस्तावत्पर्यन्तमत्र अकबरे अस्मिन्परतन्त्रताविषये वा ते—तव सन्धिकरण शोभन न, त्वया सन्धिर्नैव कर्तव्य इति भाव । असौ म्लेच्छाधिप —म्लेच्छराज स्वयं सन्ध्यर्थं—सन्धिकरणार्थं त्वत्पदे निपतिष्यति । वक्ष्यमाणमकबरस्य सन्धिप्रार्थनं बीजरूपेण उपक्षिप्यते इति भाव ॥ २६ ॥

अथ चन्दावन्मन्त्री सन्धिप्रार्थनया उद्विजमान प्रतापं कथयति—**क्षणेनेति** । वय सन्धे सोपाधिदूषणम् , इद त्वयानुचितमाचरितमित्यादिदोषारोपेण सन्धिच्छेद क्षणेनैव—अतिस्वल्पेन कालेन विधास्याम.—सपादयिष्याम ।

( अत्रान्तरे समुपतिष्ठते भिल्लराजो गुह । )

प्रता०—किमस्ति ।

गुहः—अगराणयराओ पत्तं गाहिऊण वीकाणयरजुवराअस्स
आगरानगरात् पत्र गृहीत्वा वीकानगरयुवराजस्य
पुढवीसीहस्स अणुअरो आगओ। अम्हो तं पव्वयप्पंते
पृथ्वीसिंहस्य अनुचर आगत । अह त पर्व्वतप्रान्ते
ठावइऊण तुम्हाणं समीवम्मि पत्तो ।
स्थापयित्वा युष्माक समीपे प्राप्त ।

प्रता०—तं प्रवेशय ।

( तत प्रविशति गुहेन सह पृथ्वीसिंहानुचर । )

अनुचरः—जेदु जेदु महाराओ !
जयतु जयतु महाराज. ! ( इत्युक्त्वा पत्र समर्पयति । )

( प्रताप पत्र गृहीत्वा स्वयं वाचयति सर्वान् श्रावयति । )

प्रता०—अस्मदीयं सन्धिपत्रमिति संदिग्धमेव ।

इन्दोरसा०—अथ किम् ।

चन्दा०—इदमतिशोभनं जातम् ।

प्रता०—( पृथ्वीसिंहस्य पत्रोत्तर लिखित्वा सर्वान् श्रावयति । )

युक्तमुट्टङ्कितं काले प्रेम्णा साधु त्वयोदितम् ।
अवेहि पत्रोत्तरणे क्रियां केवलमुत्तरम् ॥ २८ ॥

---

तस्य सन्धे रक्षणमरक्षण च केवल त्वदधीने-त्वदायत्ते एव । यदि भवानिच्छेत्तदा सन्धे रक्षा भविष्यति । यदि भवान्नेच्छेत्तदा सन्धिस्त्रुटितो भविष्यति तस्मात्सन्धिकरणेऽपि न किञ्चित्ते परिहृतं भविष्यतीति भाव ॥ २७ ॥

अथ प्रताप पृथ्वीसिंहस्य पत्रोत्तर लिखित्वा चन्दावदादीन् श्रावयति—युक्तमिति । काले समुचितावसरे तत्र अकबरसभायां, सन्धिसमुन्मुखस्य मम सन्धिकरणवेलाया वा युक्तमुचितमुट्टङ्कितम् । अकबरसभायामस्मत्कृतसन्धिखण्डने मम प्रतिबोधने वा साधु कथितम् । त्वं पत्रोत्तरणे स्वकीयपत्रोत्तरविषये केवल क्रियामस्मद् व्यापारम् उत्तरमवेहि जानीहि । यो हि मम व्यापारो भविष्यति स एव सन्धिप्रार्थनाप्रार्थनयोरुत्तरं भविष्यतीत्यर्थ ॥ २८ ॥

**सर्वे—साधु साधु ।**

( तत पत्रोत्तर गृहीत्वा निष्क्रामति पृथ्वीसिंहस्यानुचर• । )

**प्रता०—**( इन्दोरमासन्त गुह चाभिलक्ष्य आज्ञापयति । )

**विप्रस्वं यज्ञकार्योद्धृतमथ गणिका हीनदीनां च नारीं**
**बालां सीमन्तिनीं वा पतितमपि महारुग्णमन्धं क्षुधार्तम् ।**
**मूर्च्छालं चाप्यवीरां शरणगतमथो सर्वथैतानि हित्वा**
**ज्ञात्वा शत्रोः प्रजाना सकलमपि धनं सर्वथा लुण्ठयध्वम् २६**

(तत सर्वे उत्तिष्ठन्ति । चन्दावतसहित प्रताप परिक्रामन् वने प्रविशति । अन्ये निर्गच्छन्ति । )

---

अथ प्रताप अकबरप्रजाया लुण्ठनाय आज्ञापयन्नपवदति—**विप्रस्व**मिति। तत्र परिगणयति-विप्रस्य-ब्राह्मणस्य स्व-धनम्, अकबरप्रजाया अपि ब्राह्मणस्य धनं, तथा यज्ञकार्योद्धृत-अनेन द्रव्येण यज्ञकार्यं भविष्यतीति बुद्धया निष्काशित यद् द्रव्यम्, अश्वघासादिवत्षष्ठीतत्पुरुष । तथा गणिका-वेश्या, वेश्याया धनमग्राह्यमिति स्मृत्यादौ प्रतिषेधात् । तथा हीना-हीनजात्युद्भवा, दीना-दु खिता च नारीं स्त्रियम् । एतेन हीनजात्युद्भवस्यैव दीनस्त्रिया प्रतिषेधो नत्वन्यासाम् । तथा बाला बालिकाम्—अपरिणतवयस्काम्, सीमन्तिनीं—सद्यो विवाहिताम् । तथा पतितमपि—जातिबहिष्कृतम्, महारुग्ण—कुष्ठादिमहारोगाक्रान्तम् , तथा अन्ध—दृष्टिरहितम् । क्षुधार्तं—क्षुधापीडित क्षुधानिवर्तकमात्रद्रव्योपेतम् । मूर्च्छाल—मूर्छोपेतम्—तथा अवीरा—पतिपुत्ररहिताम् , ' अवीरा निष्पतिसुता ' इत्यमर । तथा शरणगतम्—अहं त्वदीयस्त्वमेवास्माकं त्रातेति बुद्धया शरण प्राप्तम् , एतानि 'त्यदादित शेषे पुनपुसकतो लिङ्गवचनानि' इत्येकशेषे 'पुनर्पुंमकयोस्तु परत्वान्नपुसकं शिष्यते ' इति नपुसकलिङ्गता । एतानि पूर्वोक्तानि हित्वा—परित्यज्य सकलमपि शत्रोरकबरस्य प्रजाना धन ज्ञात्वा सर्वथा लुण्ठयध्वम् । वस्त्रपात्रादिकं सर्वमपि लुण्ठितव्यमेकवसना एव ते विधातव्या इति भाव । ज्ञात्वेत्युक्तेर्यदकबरप्रजाया धनं न स्यात्किन्तु केनापि तद् द्वारया प्रेषितं स्यात्तन्नैव लुण्ठितव्यमपि तु तत्परित्याज्यमेवेति तात्पर्यार्थ ॥ २६॥

( एवमाज्ञापितास्ते पुर्तगालदेशाधिपतिना अकबराय प्रेषितान्युपायनानि गुर्जरमार्गे लुण्ठयन्ति । पुर्तगालाधिपतिं गृहीत्वा कथयन्ति । )

इन्दोरसा०—रे पौर्तगालीय ! कस्मादिदमानीतम्? केन कस्मै च प्रेषितम् ?

पौर्तगा०—पुर्तगालदेशादिदमानीतम् । पुर्तगालराजेन भारतेश्वराय प्रेषितम् ।

इन्दोरसा०—साधु साधु । को नाम भारतेश्वरः ?

पौर्त०—अकबरः ।

इन्दोरसा०—नहि नहि भ्रान्तोऽसि । अधश्वो भारतेश्वरः सुगृहीतनामा महाराणाप्रतापः । तेन तवोपायनानि गृहीतानि । अथ गच्छ यथेच्छस्थानम् ।

( इति स निर्गच्छति । पुनस्ते अरण्ये प्रविशन्ति । ) ( पटीक्षेप । )

( इत आगरानगरे पर्षद्युपविष्ट सामन्तादिपरिवृतोऽकबरश्चिन्तयति । )

अकबरः—मानसिंह ! कथमद्यापि पृथ्वीसिंहानुचरो नायातः। किं नाम केनापि तद्वैरिणा मम क्षणिकसुखसंपादनाय मायिकमेवेदं कृत्यं विहितमिति सत्यं स्यात् ।

मान०—संभाव्यते चैवमपि, परं पृथ्वीसिंहानुचरस्यागमनानन्तरमेव निश्चेष्यामः ।

अक०—मानसिंह ! तावत्प्रतापदूतमानय, निश्चेष्यामः केन कुतः स्थानात्पत्रं दत्तम् ।

( मानसिंह स्वय गत्वा आरक्षकाधिपतिमाहूय तेन सह प्रविशति । )

आरक्षकाधिपतिः—जयतु जयतु महाराजः !

अक०—कुत्र प्रतापदूत ?

आर०—स च तस्मिन्नेव दिवसे त्वदीयाज्ञापत्रेण निष्कासितः। ( इत्याज्ञापत्रं दर्शयति । )

अक०—संवदन्ति मदीयानीवेमान्यक्षराणि । परं कस्येयं माया स्यात्?

मानसिंहादयः—बाढं भवदीयानीवेमान्यक्षराणि । बाढं स चतुरो मायिकः ।

( ततः प्रविशति स्वानुचरसहितः पृथ्वीसिंहः । )

पृथ्वी०—जयो योगमायायाः । ( इत्युक्त्वा यथास्थानमुपविशति । )

अक०—(सस्मितम्) किमुक्तं त्वदीयेन मेवाडाधिपतिना प्रतापेन ।

( पृथ्वीसिंहः प्रतापपत्रं दर्शयति । )

अक०—('अवेहि पत्रोत्तरणे क्रिया केवलमुत्तरम्' इति वाचयन्सर्वान् श्रावयति।)

मानः—नैतावताऽवगम्यते, सन्धिक्रिया विरुद्धक्रिया वा ।

( अत्रान्तरे प्रविशति सम्भ्रान्तः पुर्तगालराजस्य दूतः । )

दूतः—( रुदन् ) महाराज ! लुण्ठितोऽस्मि ।

अक०—कस्त्वम् ? कथं लुण्ठितोऽसि ?

दूतः—महाराज ! पुर्तगालराजेन त्वदर्थमुपायनीभूतानि बहुमूल्यानि रत्नानि प्रेषितानि, तानि गुर्जरप्रान्ते लुण्ठाकाः 'भारतेश्वरः प्रतापस्तस्यैवेदमुपायनम्' इत्युक्त्वाऽलुण्ठन् ।

( अथात्रान्तरे पुनः प्रविशन्ति श्रेष्ठिनः प्रजाजनाश्च । )

श्रेष्ठिनः—हा ! हताः स्मः, वयं सर्वे लुण्ठिताः ।

अक०—कैः ?

श्रेष्ठिनः—स्वस्वामिनं भारतेश्वरं मन्यमानैः प्रतापानुचरैः ।

प्रजाजनाः—हा! हताः स्मः, अस्माकं सर्वस्वमेव लुण्ठितम्, वयमेकवसना एव कृताः स्मः ।

अक०—कैः ?

प्रजा०—आत्मनः प्रभुं प्रतापं भारतेश्वरं मन्यमानैर्भिल्लभीणादिभिः ।

पृथ्वी०—( अकबरमभिलक्ष्य ) महाराज ! मन्ये तदुत्तरणे इयमेव क्रिया स्यात् ।

अक०—अथ किम् । इयमाक्रमणक्रिया तदुत्तरम् । मन्ये तत्पत्रं न तेन लिखितम् ।

पृथ्वी०—एतद्व्यापारेण तु इदमेव निश्चीयते ।

अक०—मानसिंह ! धिक् त्वाम् बहुतरद्रव्यनाशेऽपि नायं प्रतापस्त्वया धृतः । मिथ्याभिमानिना त्वया किं तस्य कृतम् । त्वदर्थे एव मया तेन सह वैरं विहितम् । त्वं निस्सर, यावत्प्रतापस्त्वया न निगृह्यते, मेवाडाद्वा न निस्सार्यते तावत्पर्षदि न प्रवेष्टव्यम् ।

( मान किञ्चिद्वक्तुमभिलषन् स्थितः । )

अक०—( सक्रोधम् ) याहि याहि निस्सर ।

मान०—( मनसि ) ज्ञातिद्वेषफलमिदमनुभूयते । यत्सर्वसमक्षं शुनक इव तिरस्कृतोऽस्मि ( प्रकाशम् ) धैर्यं दधातु भवान् ।

अक०—लुण्ठाकैः सकलोऽस्मदीयविषयः संत्रास्यते दुर्जनैः
सर्वस्वं ह्रियते प्रजाजनगतं जीवाम्यरक्षन्नहो ।
एकेनैव वनेचरेण निहतः पन्थाः सुखस्योदये
राज्यं पूर्णमराजकं कृतमतो धैर्यं मयि स्यात्कथम् ॥ ३० ॥

---

अकबरो धैर्यस्य नायमवसर इति दर्शयति—लुण्ठाकैरिति । दुर्जनैर्दुष्टैर्लुण्ठाकैः प्रतापानुचरैर्भिल्लमीणाजात्युद्भवैः सकलः—समस्तः अस्मदीयविषयः—अस्माकं देशः, संत्रास्यते—उद्वेज्यते । ते सकलमस्मदीयदेशमुद्वेजयन्तीत्यर्थः । प्रजाजनगतं प्रजासविधे यद्विद्यमानं तत्सर्वस्वं—सर्वं धनं ह्रियते—हठाद् गृह्यते । अहमरक्षन् प्रजाजनस्य रक्षामकुर्वन् सन् जीवामि अहो इत्याश्चर्ये । राज्ञोऽयं धर्मः । यदि प्रजाधनं रक्षितुं न प्रभवति तदा लुण्ठाकानां सम्मुखं गत्वा रणे म्रियेत, राज्यं वा परित्यजेत् । धर्मज्ञस्तदकुर्वन्नहं जीवामीत्याश्चर्यम् । एकेनैव प्रधानभूतेन प्रतापेनैव एवकारोऽन्ययोगव्यवच्छेदको न तु बहुभिः, तत्रापि वनेचरेण अरण्यवासिना । एतेन अतितुच्छत्वं तस्य सूच्यते । सुखस्य उदये, प्रजाया मम च सर्वेषामपि सुखप्रारम्भे पन्था मार्गो निहतः । येन मार्गेण सुखस्य प्रारम्भो भवति स मार्ग एव नाशितः । एतेन सर्वथा सुखस्याभावः सूचितो भवति । राज्यमस्मदीयं राज्यं पूर्णं

यः प्रतापं निगृह्णीयात्स मम राज्यलाभस्य दशमांशभागी स्यात् । ( पुन किंचिच्छ्रान्त सन् ) मानसिंह ! गच्छ त्वं यथेच्छं साहाय्यमादाय प्रतापं तत्पुत्रं कन्यकां वा निगृह्णीया' ।

मानः—यदि मेवाडं परित्यज्य नासौ पलायते तदैनं हनिष्यामि, ग्रहीष्यामि वा ।

अक०—एवमेव त्वयि संभाव्यते ।

(ततो निष्क्रामति सामन्तपरिवृत प्रजाजनमहितो मानसिंह पृथ्वीसिंहश्च ।)

( वीरवरेण मन्त्रिणा च समन्वितोऽकबरस्तिष्ठति । )

अक०—( मनसि ) अयं पृथ्वीसिंहः प्रतापपक्षपाती, अतो मेवाडकन्यकामस्य पत्नीं स्ववशमानये ततोऽयं तत्पक्षं विहाय मम वशवर्ती भविष्यति ।
( प्रकाशम् । ) मया स्त्रीणां चातुर्यशिक्षणार्थं विपणिः स्थापिता । तत्रैवं भवतु—

सकलविपणिमध्ये सर्वत. संचरेयु-
र्नवनववसनाद्यैर्भूषिताः सद्विभूषा ।

---

सर्वतोभावेन अराजक कृतम् । एव विहित यथैव प्रतीयते अत्र राज्ये प्रजा-पालक कोऽपि राजा नैवास्ति । अत अराजकताकरणात् मयि धैर्यं कथ स्यात् । नाहमस्या दशाया धैर्यं धारयितु शक्नोमीति भाव ॥ ३० ॥

**नासौ पलायते** इति । एतेन षष्ठाङ्के वक्ष्यमाणो परित्यागो बीज-रूपेण उपक्षिप्यते ।

अथ नवरोजाख्य (मीनाबाजार इति लोके ) विपणौ जिगमिषुरकबरो मन्त्रिणमादिशति—**सकलेति** । नवनववसनाद्यै –नवातिनवैर्वस्त्रभूषणै॰ भूषिता. शोभिता , तथा सती उत्तमा विभूषा नेपथ्यरचना यासा तास्तथा विविधा नानाविधा ये विषया देशास्तेभ्यो याता –आगता , अथवा विविधा ये विषया–वस्त्रताम्बूलाभूषणादिविक्रया जलानयनसमार्जनादिकानि तत्र याता –प्राप्ता , वस्त्राभूषणादिसकलवस्तूना क्रयविक्रयादिक स्त्रिय एव कुर्व

विविधविषययाता योषितश्चैकभाषा
इति मम नवरोजः कामपूर्तिं विदध्यात् ॥ ३१ ॥
अहमपि प्रच्छन्नवेषस्तत्राद्य गमिष्यामि ।
( मन्त्रिणः कर्णे-एवमेव । )

**वीरवरः**—( तदभिप्रायमभिलक्ष्य ) किमिदं चिकीर्षति भवान् ?

अन्तःपुरे स्वे सुमनोहराभी
रम्भोरुभिर्हाटककान्तिकाभिः ।
रम्भादिकानामतिशायिनीभिः
स्त्रीभिः कथं तुष्यति नो त्वदात्मा ॥ ३२ ॥

---

न्त्विति भाव । एका एव भाषा यासा तास्तथाभूता, देशभेदाद्भिन्नभाषा अपि ता एकभाषया भाषन्ताम्, एतेन तदुक्तं स्वेन, स्वोक्तं ताभिरवगत स्यादिति तदभिप्राय । योषित –स्त्रिय, सकला–समस्ता या विपणि – पण्यवीथिका तस्या मध्ये सर्वत –सर्वतोभावेन सचरेयु, तत्र स्त्रिय एव सचरन्तु नच कस्यापि पुरुषस्य तत्र सचारोऽपि स्यादिति तदाशय· । इति अमुना प्रकारेण नवरोजो मम कामपूर्तिं स्त्रीणा चातुर्यशिक्षणाभिलाषम्, अथवा सभोगेच्छाविषयकाभिलाषपूर्तिम् । अथवा कामस्य–मनोभवस्य पूर्तिं–यथेच्छमनोभवतृप्तिं विदध्यात्–करोतु । एतेन अभिलाषातिशयो द्योत्यते ॥ ३१ ॥

अथ वीरवलस्तदभिप्रायमवगत्य परस्त्रीसंसर्गात्प्रतिषेधति—**अन्तःपुरे** इति । सुमनसो–देवास्तेषा हराभि, सौन्दर्येण देवानप्याकर्षयन्तीभि, यासा सौन्दर्यमवलोक्य देवा अप्यभिलषन्ति । यद्वा–सुमनस· पुष्पाणि तासां हराभि, स्वशोभया पुष्पाणि हरन्तीभि, स्वकान्तिसमक्ष पुष्पशोभा नाशयन्तीभिरित्यर्थ । अथवा–सुष्टु शोभनप्रकारेण मनसो हराभि, अतिसुन्दरीभिरित्यर्थ । तथा रम्भा इव कदलीस्तम्भसदृशौ ऊरू यासा तास्तथा, हाटकस्य–सुवर्णस्य कान्तिरिव कान्तिर्यासा तास्तथा रम्भातुल्यामपि सौन्दर्यवतीमतिशायिनीभि अतिक्रान्तवतीभि स्त्रीभि तवात्मा–त्वदीया चित्तवृत्ति, स्वे–स्वकीये अन्त पुरे कथ नो तुष्यति । तथाभूताभिरतिसुन्दरीभि स्त्रीभि सह तवात्मा कथं न तुष्टो भवतीति भाव ॥ ३२ ॥

अलं राजधर्माद्विरुद्धेन सुतामातृतुल्याभिः स्त्रीभिः सह व्यभिचारेण ।

अन्योपभुक्तां परकीयकान्तां भोक्तुं न ते धावतु चित्तवृत्तिः ।
उच्छिष्टभोजी खलु सारमेयस्तस्मात्परीवादपदं च मा गाः ३३॥

अक०—वीरवर ! राजधर्मपरिज्ञाने त्वं तावद्बाल एव । नैवंविधेषु कार्येषु राजधर्मः परिपन्थी भवति ।

शृणु तावद्राजधर्मम्—

प्रजां पुत्रमिवेक्षेत स्वात्मानमिव पालयेत् ।
समासेनायमाख्यातो राजधर्मः पुरस्तव ॥ ३४ ॥

किञ्च—ईतावापत्तिकाले च प्रजायाः पालनं चरेत् ।
व्यसनाद्भयतो रक्षेदेष धर्मो महीपतेः ॥ ३५ ॥

---

अथ परस्त्रीसंसर्गे घृणा निन्दा च दर्शयन् प्रतिषेधति—अन्येति । ते तव चित्तवृत्ति, अन्येन—अन्यपुरुषेण उपभुक्ता परकीयकान्ता—परस्त्रियम्, अथवा-परकीया कान्ताम्, स्वकीयातिरिक्तामन्यस्त्रियम् । एतेन पित्राद्यधीनतया कन्याया अपि परकीयात्वम्, तुभ्यमदत्ता कस्यचित्कन्यका च । भोक्तु न धावतु—उपभोक्तुं नैव गच्छतु । अन्योपभुक्तभोक्तृत्वे घृणा प्रदर्शयति—उच्छिष्टभोजी—अन्योपभुक्तपरित्यक्तभोगी, सारमेय—शुनक । खलु इति निश्चये । सारमेय एव उच्छिष्टभोजी भवति, नान्य इत्यर्थ । तस्मात् परीवादपदम्—आक्षेपस्थान मा गा. । लोकास्त्वा सारमेय कथयिष्यन्तीति भाव ॥ ३३ ॥

अथाकबरोऽन्यदोष स्वीकृत्य केवल राजधर्माद्विरुद्धता निरस्यति । तत्र राजधर्मस्वरूप प्रदर्शयति—प्रजामिति । प्रजा पुत्रमिव ईक्षेत, यथा पुत्रकष्टे उद्विग्न सन् शीघ्रमेव तन्निवृत्त्यर्थमुपाय करोति एवमेव प्रजाकष्टेऽपि शीघ्रमेवोपायं कुर्यात् । स्वस्य आत्मानमिव पालयेत् । दुष्कालसमये भोजनादिदानेन ता पालयेत्, कष्ट च न दद्यात् । अय राजधर्मस्तव पुरस्तवाग्रे मया समासेन—संक्षेपेण, आख्यात—कथित. । राजधर्मे एतदेव तत्त्वमिति भाव ॥ ३४ ॥

पुनराह—ईताविति । ईतौ—अतिवृष्ट्यनावृष्ट्यादिसमये आपत्तिकाले

अन्यच्च—धर्मादर्थं न वा कामं बाधयेत विचक्षणः ।
धर्मकामौ न चार्थेन कामाद् द्वौ नेति निर्णयः ॥ ३६ ॥
अपि च—धर्मादर्थं विचिनुयादर्थात्कामं च साधयेत् ।
कामो मनोऽनुकूल. स्यात्स्वर्गेऽस्माच्च परं किमु॥ ३७॥

---

आपत्तिसमये चौराग्निभयादिसमये प्रजाया पालन चरेत्–अन्नवसनादि-साहाय्यदानादिना प्रजाया रक्षण कुर्यात् । व्यसनात् द्यूतमद्यादिव्यसना-दिभ्य भयतो व्याघ्रादिभयाच्छत्रुभयाच्च रक्षेत् प्रजाया रक्षा कुर्यात्, एष महीपते राज्ञो धर्म , एष राजधर्म इत्यर्थ ॥ ३५ ।

पुना राजधर्मे धर्मार्थकामाना व्यवस्थामाह—**धर्मादि**ति । विचक्षण - उत्तमविवेक्ता राजा धर्मात् अर्थं न बाधयेत, न च काम धर्मात्काममपि न बाधयेत । नैव प्रकारेण धर्मे आसक्त. स्यात् येन अर्थसाधककार्यमेव विनश्येत् । नापि नितान्तं काम परित्यज्य धर्ममेव सेवेत । किन्तु अर्थ-कामावबाधयित्वैव धर्म सेवेत । एवमर्थेन धर्मकामौ न बाधयेत । नैवार्थ-लिप्सया अधर्मेण अर्थोपार्जन कुर्यात्, तथा कामस्य व्ययसाध्यत्वादर्थ-लिप्सया काममपि न परित्यजेत् । तथा कामाद् द्वौ पूर्वोक्तौ धर्मार्थौ न बाधयेत । अयमर्थ –न च कामलिप्सया धर्मविरुद्ध भगिन्यादिगमनं कुर्यात् । नापि कामेन सर्वथा अर्थ नाशयेत् इत्येष निश्चय । सकलशास्त्रसिद्धान्त-सिद्धोऽयमर्थ इति भाव ॥ ३६ ॥

अथ पुनस्तत्प्रकारमाह—**धर्मादि**ति । धर्मात् अर्थं–द्रव्योपार्जन विचिनुयात् । पुष्पावचयमिव द्रव्योपार्जन कुर्यात् । यथा पुष्पाण्यवचिन्वन् पुष्पवृक्ष न नाशयति, एवमेव धनमवचिन्वन् धनिन न नाशयेत् । यत पुष्पमिव पुनरपि धन दद्यात् । विचिनुयात्सर्वेभ्य किञ्चित्किञ्चिद् गृह्णीयान्न-चैकत एव सर्वं गृह्णीयादित्यर्थ । एवमर्थात् काम–कार्यं साधयेत् । कामो मनोऽनुकूल मनस अनुकूलो मनोऽनुकूल स्यात्, यत्र मनोऽभिरमते तदेव कार्यं कुर्यादित्यर्थ । अभिलाषोपनीत कार्यं साधयेदित्यर्थ । अस्मात् एतस्माच्च परमधिक स्वर्गे किमु-नात पर स्वर्गेऽपि किञ्चिदस्तीति भाव ॥ ३७॥

मन्त्रिन् ! त्वं गत्वा तथैवारचय । अहमपि यथावसरं प्रच्छन्नवेषः संचरिष्यामि ।

वीरवरः—( नीचै स्वरेण ) नैवमवगच्छसि । यदा कस्या अपि सावित्रीसमायाश्चण्डिकाया आर्यक्षत्रियाया हस्ते निपतिष्यसि तदैव राजधर्मं शिक्षिष्यसे ।

( इति वदन्निष्क्रान्त । )

( अकबरो मन्त्रिणा सह परिक्रामति । ) ( पटीक्षेप ) ।

( अकबर नवरोजसुखमुपभुञ्जन् पृथ्वीसिंहपत्नीं निग्रहीतु दूतिकया विमार्गेण स्वभवनेऽवरुणद्धि । तत. सर्वत पिधीयन्ते कपाटानि ।)

चण्डिका—(मनसि) आः किमिदं जातम् । कथमहमवरुद्धाऽस्मि । अस्तु । संभाव्यते दुष्टनरपिशाचस्य नारकिणोऽकबरस्येदं कृत्यं स्यात् ।

( तत प्रविशत्येकत कपाटमुद्घाटयन्नकबर । )

अक०—एह्येहि सुन्दरि ! मनोभवतापतप्तं
मा शीतलैश्च मसृणै. परितर्पयाङ्गैः ।
दासस्त्वदीयमुखपद्ममसौ द्विरेफः
पातुं यदिच्छति ततोऽनुगृहाण मुग्धे ! ॥ ३८ ॥

---

स्वर्गलक्षण चैतत्—

यन्न दु.खेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीत च तत्सुख स्व पदास्पदम् ॥

अतो राज्यमुपलभ्य मनोऽनुकूल एव कामसुखोपभोग कर्तव्य इति भाव ।

अकबरश्चाटूक्तिभिस्ता प्रलोभयति-एह्येहीति । हे सुन्दरि—सौन्दर्ययुक्ते ! त्वमेहि एहि । अवश्यमिह मत्सकाशं प्राप्नुहि । त्व मनोभवस्य—कामस्य तापेन तप्त–संतप्यमान मा शीतलै –शैत्यगुणविशिष्टै', तापे शीतलं सुखजनकं भवतीति सुखजनकै मसृणैश्चिक्कणै अङ्गै —स्वकीयैरवयवैर्मुखोदरजङ्घादिभि. परितर्पय । पुन पुनस्तत्संसर्गेन तापमपनयेत्यर्थ । दासस्त्वदीयदासभूत असौ द्विरेफ,—रेफद्वयविशिष्टो राजाऽकबरो भ्रमरो वा त्वदीय-

चण्डिका—(मनसि) आः ! कथमसौ पापात्मा मामाक्रान्तुमभिलषति । अहमेनं नारकिणं पापाचरणफलमनुभावयामि ( इति विचिन्त्य सहसा आक्रम्य तमकबरं पातयति । असिपुत्रिका निष्काश्य तस्य हृदये स्थापयति । )

अक०—(आसन्नमृत्युमिवात्मानमवगत्य भयत्रस्तनयनो विह्वल सन् दीनस्वरेण ता कथयति) मातः ! अनुगृहाण मुञ्च माम् ।

चण्डिका—आर्यस्त्रीणां सम्मुखं नैव पश्ये-
स्ताभिः सार्धं नैव काङ्क्षां विदध्याः ।
धर्मात्सर्वा मातरस्स्युस्त्वदीया
इत्थं ब्रूयाश्चेत्ततस्त्वां त्यजामः ॥ ३९ ॥

अक०—आर्यस्त्रीणां संमुखं नैव द्रक्ष्यामि । ताभिः सार्धं नैव काङ्क्षां विधास्ये। धर्मात् सर्वा आर्यस्त्रियो मे मातरः सन्तु । मां मुञ्चतु मातः ! ( इति दीनमिव प्रार्थयते )

चण्डिका—गच्छ । मुच्यसे मृत्युमुखात् (इति असिपुत्रिकामुत्थाप्य पृथक् स्थिता सती निष्क्रान्ता । )

---

मुखपद्म-त्वदीयं मुखमेव पद्मं त्वदीयमुखकमलं पातुमधरोष्ठ पातुं मुख सातिशयं चुम्बितु वा यद् यस्मात्कारणादिच्छति ततस्तस्मात्कारणात् हे मुग्धे ! अज्ञातास्मत्संसर्गलाभे मूढ इत्यर्थ । अनुगृहाण अनुग्रहं कुर्वित्यर्थ ॥ ३८ ॥

अथ सा अकबरेण प्रतिज्ञा कारयति—आर्यस्त्रीणामिति । त्वम् आर्यस्त्रीणा संमुख नैव पश्ये , सदसद् बुद्ध्याऽपि ता द्रष्टुमिच्छा न कुर्याः । ताभि· सार्धं काङ्क्षा नैव विदध्या । इच्छन्तीभिरनिच्छन्तीभिश्च आर्यस्त्रीभि सह संसर्गविषयिणीमिच्छामपि न कुर्या । धर्मात्सर्वा आर्यस्त्रियस्त्वदीया मातर स्यु । आर्यस्त्रियस्त्वदीया धर्ममातरो भवन्तु । चेदित्थं ब्रूया कर्तुर्लकारस्य विपरिणमेनन कथयेस्ततस्त्वा त्यजाम अधुनैव त्यक्ष्याम· अन्यथा मारयाम । वर्तमानसामीप्याल्लट् । ‘ अस्मदो द्वयोश्च ’ इति बहुवचनम् ॥ ३९ ॥

अक०—( स्वाङ्गानि परिमृजन्नुत्तिष्ठति। भयादितस्ततोऽवलोक्य मनसि ) आः! साक्षाच्चण्डिका रुद्राणी कालीव प्रचण्डकोपा वीरा सा (प्रकाशम्) आः! बाढं मेवाडभूमेरेवायं प्रभावः, यद्देशजाः स्त्रियोऽप्येवंविधा वीरा भवन्ति। तत्रत्येषु पुरुषेषु कीदृशं शौर्यं स्यादित्यनिर्वचनीयमेवैतत्। अहो दैवान्मृत्युमुखान्मुक्तोऽस्मि। नातः परं नवरोजमागमिष्यामि। ( इति निष्क्रान्ता सर्वे। )

इति श्री महामहोपाध्यायमथुराप्रसादकृतौ वीरप्रतापनाटके पञ्चमोऽङ्क।

---

**आ बाढमिति**। स्त्रीषु नाद्यावधिपर्यन्तमेतादृशं शौर्यमवलोकितम्, यच्चेद दृष्टमनुभूत च तद् बाढ निश्चयेन मेवाडदेशस्य भूमेरेव अय प्रभाव। इय मेवाडदेशोत्पन्नेति तद्भूमिप्रभावादस्यामेतादृश सौन्दर्यं जातमित्यर्थ। स्त्रीपुरुषयो शौर्यतारतम्येनाह। यद्देशजा स्त्रियोऽप्येवविधा वीरा इति तासा तारतम्येन स्त्रीणामपेक्षया पुरुषेषु कियदधिक शौर्यं भवतीति पर्यालोचनाया मेवाडदेशोद्भवेषु कीदृश शौर्यमित्यनिर्वचनीयमेवैतत्। वक्तुमशक्यमेवैतत् तत्सादृश्यस्याभावान्नैवं वक्तु शक्यते एतादृश तेषु शौर्यमिति भाव।

इति श्रीसर्वतन्त्रस्वतन्त्रमहामहोपाध्यायविद्यावारिधिमथुराप्रसादकृतौ वीरप्रतापनाटके वैजयन्तीव्याख्याया पञ्चमोऽङ्क।

## षष्ठोऽङ्कः ।

( इहाधित्यकाया स्थितो मन्त्रिसमन्वित प्रतापश्चिन्तयति । )

प्रता०—श्रूयते महता बलेन मानप्रभृतयः सन्नह्यारोहन्ति ।

चन्दा० मन्त्री—एवमेवैतत् ।

मानोऽपमानाद्धनलिप्सयाऽन्ये
स्वान्तेन न स्वान्तमपि स्मरन्तः ।
अन्वेषयन्त्यद्रिगुहान्धुशाखि-
ष्वधित्यकोपत्यकयोर्भवन्तम् ॥ १ ॥

( तत प्रविशति मुकुलितहस्तो नि श्वसन् गुह । )

गुहः—महाराअ ! गहिओ ।

महाराज ! गृहीत ।

प्रता०—किं मानः शाहवाजो वा ?

---

मानसिंहवचसा ' मेवाड परित्यज्य यदि नासौ पलायेत' इत्यादिनोपक्षिप्तस्य षष्ठाङ्कस्यारम्भ क्रियते । अधित्यकाया पर्वतस्योपरिभागे । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमर । मन्त्री मानप्रभृतीनामुद्योग दर्शयति । **मान** इति । मान –मानसिंह., अपमानात्–अकबरकृततिरस्काराद् हेतो , अन्ये शाहवाजप्रभृतय धनलिप्सया 'य. प्रताप निगृह्णीयात्स मे राज्यलाभस्य दशमाशभागी स्यात्'इत्याद्यकबरप्रदर्शितधनलोभेन हेतुना, स्वान्तेन चेतसा स्वान्तमपि स्वस्य आत्मन अन्त नाशमपि न स्मरन्त न भावयन्त सन्त , यद्वा–स्वस्य अन्तं–पर्यवसानम् यवनसाम्राज्ये अस्माक कीदृश्यवस्था भविष्यतीति न स्मरन्त. । भाविफलमचिन्तयन्त इत्यर्थ । अथवा–स्वान्तेन–चेतसा स्वान्तं–चित्त न स्मरन्त. अमनस्का एव कार्यं कुर्वन्त इत्यर्थ । अद्रय -पर्वता , गुहा-देवखातस्थानानि, अन्धव –जलरहित-कूपा , शाखिनो–विटपास्तेषु, अधित्यकाया–पर्वतोपरिभागे, उपत्यकाया–पर्वतस्यासन्नभागे च भवन्तमन्वेषयन्ति–गवेषयन्ति । एतेन निलयनस्यानवसर सूचितो भवति ॥ १ ॥

गुह:—णहि णहि, अम्हाणं गमणागमणमग्गो माणसीहाईहिं
नहि नहि, अस्माक गमनागमनमार्गो मानसिंहादिभि.
अहिकिओ। माणप्पहिइसंरक्खिया पलयकालीणसमुद्द-
अधिकृत । मानप्रभृतिसरक्षिता प्रलयकालीनसमुद्र-
णिणदसमणिग्घोसा चविन्दाभीमगढकोमलमीराइट्ठा-
निनदसमनिर्घोषा चविन्दाभीमगढकोमलमीरादिस्था-
णेसु विअत्ता दुग्गवणपव्वयकन्दरारुक्खवसुहाहिच्च-
नेषु व्याप्ता दुर्गवनपर्वतकन्दरावृक्षवसुधाधित्य-
गुवच्चगासु सव्वओ पसरमाणा अगबरसेणा इओ
कोपत्यकादिषु सर्वतः प्रसरन्ती अकबरसेना इतो
णाइदूरे ठिआ।
नातिदूरे स्थिता ।

प्रता०—किं दैन्यं परिहाय पर्वतगतं शत्रोर्बलं नाशयन्
नश्येयं किमु वा निलीय कुहरे कालं नयेयं पुनः।
किं वा मातृभुवं विमुच्य विपिने तिष्ठेयमात्मद्रुतेः
यद्वा मित्रकलत्रपुत्रसहितो गच्छेयमन्यक्षितौ ॥२॥
गुहराज! त्वमपि कथय, किमतः परं कर्तव्यम्।

---

**मानप्रभृतीति** । मानसिंहप्रभृतिभि सरक्षिता । एतेन अनेकेऽत्र सेनापतयो बहवश्चात्र सेनाविभागा इति सूच्यते । तथा प्रलयकाले जातो य समुद्रनिनद -समुद्रशब्दस्तेन समो निर्घोषो हरहरायमाणशब्दो यस्या स तथा । चविन्दाभीमगढकोमलमीरादिस्थानानि स्वस्वनाम्ना प्रसिद्धानि तेषु व्याप्ता । अन्यत्सुगमम् । नातिदूरे स्थिता, एतेन शीघ्रमेव तदुपायकर्तव्यता सूचिता भवति ।

प्रतापस्तदुपायं परामृष्यन् कथयति—**किं दैन्यमिति** । किं दैन्यं—पर्वतादिषु पलायनादिकं परिहाय—परित्यज्य पर्वतगत—पर्वतप्राप्तं शत्रोर्बलं—सैन्यं नाशयन्—मारयन्, सेनाया बाहुल्यात्तत्रैव नश्येयम् । किमु वा कुहरे—महागर्तादिप्रदेशे, निलीय—अन्तर्हितो भूत्वा पुन कालं नयेयं—कालयापनं

गुहः—अहुणा इह ट्ठिओ गहिओ हविस्सइ। अओ पव्वयच्चाओ
अधुना इह स्थितो गृहीतो भविष्यति । अत पर्वतत्याग
कत्तव्वो। जीवमाणो पुणो वि महाराओ विजिस्सइ।
कर्तव्य । जीवन् पुनरपि महाराजो विजेष्यते ।

मन्त्री—महाराज! युज्यते चैवम् ।

प्रता०—तर्हि पर्वतावरोहणमार्गमादेशय ।

गुहः—इदोऽवरोहन्तु महाराआओ ।
इतोऽवरोहन्तु महाराजा ।

( इति सर्वेऽवरोहन्ति । )

अमरसिंहः—हा मातृभूमे ! नीतिवशात्त्वमधुना मुच्यसे ( इति वदन् रोदिति ) हा वसुंधरे ! पुनरपि मामनुग्रहीष्यसि ।

प्रता०पत्नी—अयि विस्संभरे पुणो वि सुमरिस्ससि । अणुग्गहेण सिग्धं सकुडुम्बं चेव इमं जणं समुवट्ठाविस्ससि । ( इति रुदती अवरोहति । )
अयि ! विश्वम्भरे पुनरपि सुस्मरिष्यसि । अनुग्रहेण स्निग्ध सकुटुम्बमेव इम जन समुपस्थापयिष्यसि ।

प्रता०—( पुन· परावृत्त्य )

मातस्त्वदङ्कपरिवर्धितलालितोऽयं
मुक्त्वा प्रयाति विषयान्तरमद्य मूढः ।

---

कुर्याम् । किं वा मातृभुवं विमुच्य—त्यक्त्वा, विपिने—वने, आत्महुते·-आत्महुति विधाय तिष्ठेयम् । पक्षत्रयेऽपि अनिष्टसंभावनया सिद्धान्तयति । यद्वा—मित्रं च कलत्र च पुत्रश्च तै सहितोऽन्यक्षितौ सर्वथा अपरिचितस्य राज्ञ पृथिव्या देशे इत्यर्थः । गच्छेयम् । तत्र शत्रोर्गमनागमनाभावादित्यर्थ ॥ २ ॥

अथ प्रताप शुचा कथयति—**मात** इति । हे मात ! त्वदङ्के—त्वन्मध्यभागे अयं प्रताप परिवर्धित , लालितश्च । मातुरुत्सङ्गे सार्वकालिकी स्थितिर्न भवति,

किं युक्तमत्र किमु वा न च युक्तमेत-
न्नो निर्णये मम मतिः कथमप्युपैति ॥ ३ ॥

( इति कथयन् प्रणमति । पुन किञ्चित्पराश्रुत्य सर्वे प्रणमन्ति । )

सेनापतिः—त्वर्यताम्! त्वर्यताम्! दूरेऽस्माकं विश्रामस्थानम्।

प्रता०—आः प्रचण्डः सहस्रभानुः सन्निहित इवासावुपतिष्ठते।

सेना०—दारुणो भूमे. संतापः ।

चन्दा०—आः! पश्य पृथिव्या दौरात्म्यम् । एपा

भर्तुर्मे रमणी कथं चरणतो मां स्प्रष्टुमेवेच्छती-
त्यालोच्यैव रुषा क्षमाऽतिपरुषा सापत्न्यबुद्ध्या सती ।
राज्ञ्याः पादतलेऽनलं निदधती दृष्टौ तु चाकिचक्यता-
मेषा पश्य सुतां सुतानपि भृशं संतापतः क्लिश्यते ॥ ४ ॥

---

शैशवकिशोराद्यवस्थायामङ्गाद्बहिर्भागे एव लालनपालनादिकं भवति । तव तु अङ्के एव सदैव परिवर्धितो लालितश्चेति मातुरस्याः स्नेहातिशय. सूच्यते । अद्य मूढ'—कर्तव्याकर्तव्यपरिज्ञानशून्य । अद्येत्यनेन सर्वकाले भक्तिसत्त्वेऽपि अद्य मूढ अय प्रताप मुक्त्वा प्रत्यासत्त्या त्वा मुक्त्वा—परित्यज्य विषयान्तरम्—अन्यो विषयो विषयान्तरम् अन्यं देश प्रयाति । यद्वा—शौर्यादिमरणविषयादन्य स्वप्राणरक्षारूप विषय प्रयाति । किमित्येवं करोषीत्याह । अत्र कर्तव्यविषये किं युक्तम्, किमु वा न च युक्तम्, एतन्निर्णये मम मति कथमपि नो उपैति । एकपक्षस्वीकारे आक्षेपशास्त्रविरोधादिना नैव निश्चयो भवति । इदमेव कर्तव्यमिति निश्चेतुं नाह शक्नोमीति भाव ॥ ३ ॥

चन्दावन्मन्त्री पृथिव्यास्तापे तस्या दौरात्म्य मन्यमान सेनापति कथयति—**भर्तुरिति** । मे मम भर्तु—स्वामिन पृथ्वीपते प्रतापस्य रमणी रमणमात्रकार्यार्थं स्वीकृता सुरतिका, कथं मामेव, सर्वथा कृताभिषेका महाराज्ञीमेव चरणत पदेन स्प्रष्टुमिच्छति । ईदृगस्या दौरात्म्यमित्यालोच्यैव विचार्यैव, एतेन बुद्धिपूर्वकमिदमस्या विधानमिति बोध्यते । क्षमा सहनशीलतया क्षमेति नाम्ना प्रसिद्धा सापत्न्यबुद्ध्या सपत्नीयमित्यध्यवसायात् रुषा—क्रोधेन अतिपरुषा—अत्यन्तकठोरा सती, राज्ञ्या. देव्या पादतले अनलमग्निं,

( तत आगच्छति किंचिद्दूरे गायन्ती योगिनी । )

योगिनी—धावत धावत भजत प्रतापम् ।
एनं धर्मकरणतो रक्षत सिन्धुशरणमुपयातम् ।
लोकालोकविसर्जितनिजवसुमपरविषयमनुयातम् ।
रिक्तकरं शिखराधरभागे स्खलितपदाब्जनिपातम् ।

---

दृष्टी–दर्शने नेत्रे वा चाक्चिक्यता निदधती–कुर्वती एषा पृथ्वी, सुता देव्या· पुत्रिका सुतानपि पुत्रानपि भृशमत्यन्त क्लिश्यते पश्य। एतृत्त्व पश्येति भाव ॥४॥

**गायन्ती योगिनी**—इय सैव गणिका तथाभूतवेषवशाद् योगवशाच्च योगिनी संवृत्ता। किं गायतीति दर्शयति—**धावते**ति । भो लोका यूयं धावत। कालातिपातो नैव कर्तव्य इत्यर्थ, सायंकाले सूर्यसद्भावे एव सन्ध्योपासन कर्तव्यमिति शिष्टोऽर्थ । मुख्योऽर्थोऽप्येवमेव व्याख्येय । यूय धावत प्रतापं-प्रतापसिंहम्, अथ च प्रकृष्टस्ताप संतापो यस्मिन्निति प्रताप –सूर्यस्तं भजत–सेवत। सैनिकादिषु सहयोगेन सध्योपासनादिना वा । एन प्रतापसिंहं धर्मकरणत –दानधर्मात्, रक्षत–सहायता कुरुत। पक्षे नोदनालक्षणोऽर्थो धर्म, वेदबोधितकार्यकरणेन यथा 'अहरह सन्ध्यामुपासीत, स्वर्गकामो यजेत' इत्यादिना बोधितस्य कार्यस्य करणत एन सूर्यं रक्षत। कीदृशमित्याह। सिन्धो· सिन्धुदेशस्य शरणम्, उपयात–प्राप्तम्। अथ च सिन्धो· समुद्रस्य शरणमुपयातम्। इत्येतत्पर्यन्त ध्रुवपदम् । पुनस्तमेव विशिनष्टि-**लोके**ति। लोका –साधारणपुरुषा, अलोकास्तदतिरिक्ता विद्वासस्तेषु विसर्जित–दत्त निजमात्मीय वसु–धनं येन तम् । अन्यत्र–लोकालोकेषु–सर्वत्रेत्यर्थ, विसर्जिता निजा वसवो–रश्मयो येन स तम्। 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु' इत्यमर । तथा अपरस्य न पर. अपरस्तस्य अपरस्य स्वकीयस्येत्यर्थ।यद्वा–अपरस्य-अन्यस्य विषय देशमनुयातम्-अनुगत प्राप्तमित्यर्थ । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमर । यद्वा–अपर.-अन्य युद्धातिरिक्त कालयापनरूपो यो विषयस्तम् अनुयातम् । अन्यत्र अपर -अनुत्कृष्ट समुद्रनिमज्जनरूपो यो विषयस्तम् अनुयातम्। यद्वा–अपरः अन्यो यो विषयो–देश अमेरिकादिदेशस्तम् अनुयातम्। पुन किं विशिष्ट-

पश्यत नीचयानमवगच्छन्नरुणकान्तिमधियातम् ।
धूलिधूसरितमेनमनंहसमभितो नमत प्रयातम् ॥
अञ्जलिपूरितवसुभिरस्य हत दुरिताहितकुलजातम् ।
प्रविशति तमो विश्वतः कुरुते सदसद्भावविघातम् ॥

---

मित्याह–रिक्तकरम् । रिक्त -द्रव्यशून्य करो–हस्तो यस्य स तथा । अन्यत्र करै रिक्त इति रिक्तकर —किरणशून्य । 'राजदन्तादिषु परम्' इति कर इत्यस्य परत्वम् । यद्वा–रिक्ता –प्रकाशशून्या , करा –किरणा यस्य स तथा । पुन किं विशिष्टम् । शिखरस्य शृङ्गस्य पर्वतोपरितनभागस्य अधरभागे–अव प्रदेशे, स्खलित –विशृङ्खलितः, पदाब्जनिपातश्चरणस्थापनं यस्य स तथा । अन्यत्र–स्खलित पदाब्जनिपातो यस्य स तथा ।

पुनराह–यूयं पश्यत । नीचस्य—यवनाधिपते –सेनानायकस्य सलीमस्य वा शाहबाजस्य वा, यद्वा–स्वज्ञातिद्वेषनीचकर्मकर्तृतया नीचस्य–मानसिंहस्य, यानम्–आरोहणम्, अवगच्छन् सन् अरुणकान्ति–रक्तवर्णम्, अधियातम्–अधिगतं प्राप्तमित्यर्थ । मानसिंहावरोहणज्ञानानन्तरमेव रक्तवर्णं प्राप्तमित्यर्थ । अन्यत्र नीचस्य–तमस , यान–प्राप्तिम्, अन्यत्समानम् । पुन किंविशिष्टम् । धूल्या धूसरितम्-ईषत्पाण्डुवर्णोपेतम् । उभयत्र समानम् । अनहसम्–पापरहितम्, तथा प्रयात–गच्छन्तम्, एन–प्रतापम्, सायंकाले अस्तोन्मुखं सूर्यं च । अभित नमत–प्रणाम कुरुत । उपस्थानादिना सूर्यं चाराधयत । तथा–अञ्जलौ पूरितानि यानि वसूनि–धनानि तै , अन्यत्र वसूनि–जलानि तै । अस्य प्रतापस्य सूर्यस्य च दुरितानि इव अहिता –शत्रवस्तेषा कुलजातं–कुलसमूहम् , यद्वा–कुले जात–शत्रुकुलोत्पन्न जातित्वादेकवचनम् । सर्वानपि शत्रुकुलोत्पन्नान् हत–नाशयत । अन्यत्र–सूर्याञ्जलिभि· अत्यन्तदुरितयुक्तत्वादभेदोपचाराद् दुरिता –पापिनो ये अहिता –शत्रवस्तेषा कुलजातं, हत–नाशयत । बहुतरद्रव्यदानेन साहाय्यकरणात्प्रतापस्य शत्रुकुल नाशयत । अन्यत्र–सूर्यविपक्षिणो राक्षसान्नाशयत । सूर्याञ्जलिभि सूर्यविपक्षिणो राक्षसा नश्यन्ते इति पौराणिकी कथाऽनुसंधेया । पुनराह—तमः–तम प्रकृतिक धर्मविरोधित्वादन्धकारस्वरूप अकबर·

लोभमानमपसारयत स्वं प्रद्योतयत प्रतापम् ।
नश्यति तम उद्यते प्रतापः प्रणमत पुनरायातम् ॥ ५ ॥

( इति गायन्ती योगिनी हठादिव सर्वानपि प्रतापानुगामिनो विदधाति । )

( ततः प्रविशति तद्ध्यानेन प्रतापानुरक्तो विह्वलो भामागुप्त । )

भामागुप्तः—आः ! क गतोऽसौ मे प्राणाधारः प्रतापः ?

क्वासौ मे प्रतिपालकः क्षितिपतिर्भूपालचूडामणि-
र्मां त्यक्त्वैव हहा प्रयाति विषये सिन्धौ प्रतापः कथम् ।
किं स्यान्मे वसुभिः सुतेन किमु वा प्राणैश्च किं वा फलं
प्राणेशं यदि तं व्रजन्तमभितो नस्यां निरोद्धुं क्षमः ॥ ६ ॥

---

विश्वत -सर्वत प्रविशति, तथा सदसद्भावयोर्धर्माधर्मयोर्विघात नाशं कुरुते । वस्तुन अस्तित्वनास्तित्वयोर्ज्ञानस्यैव नाश कुरुते इत्यर्थ । नहि गाढे तमसि किञ्चिदपि वस्तु अस्ति वा नास्ति वेति ज्ञायते । स्व-स्वकीय लोभ-सहितं मान, लोभमपि मानमपीत्यर्थ अपसारयत-दूरीकुरुत । लोभ त्यक्त्वा द्रव्यसाहाय्येन सेनासनाहं कारयत, मान विहाय अस्यानुगामित्वेन युद्धे सहयोग कुरुतेति भाव । अन्यत्र-लोभम् अस्मिन्समये एतत्कार्यं कृत्वा धनमुपार्जयिष्याम अल सन्ध्योपासनयेति लाभबुद्धिं परित्यज्य, अथ च मानम् कथं वय राजानो विशिष्टधनिनो वा क्षुद्रब्राह्मणवत् सध्योपासनं करिष्याम इत्यभिमानबुद्धिं विहाय । प्रताप-प्रतापसिंह प्रद्योतयत-राज्यप्रापणेन सर्वोत्कृष्टतया वर्तमान कुरुत, अन्यत्र-प्रताप सूर्य प्रद्योतयत-तमो विनाश्य उदित कुरुत । पुनराह । तम -तम स्वरूपं यवनशासनं नश्यति-क्षीयते,प्रताप उद्यते, अस्य प्रारब्धस्य अनुपदमेव उदयो भविष्यतीति वर्तमानसामीप्याल्लट् । अन्यत्र-तम -अन्धकारो, नश्यति-क्रमश क्षीयते, प्रताप सूर्य उद्यते। पुन आयात प्रताप सूर्य च प्रणमत-नमस्कुरुत इति ॥५॥

अथ योगिन्या वचनं श्रुत्वा विह्वलो भामागुप्त कथयति—**क्वासा-विति** । मे-मम प्रतिपालक -सरक्षक , भूपालाना-राज्ञा चूडामणि -शिरो-रत्नसदृश , असौ क्षितिपति -पृथ्वीपति प्रताप. क । कुत्रास्तीत्यर्थ । हहा इत्यत्यन्तखेदे । प्रताप मा त्यक्त्वैव सिन्धौ विषये-सिन्धुदेशे कथ

अयि योगिनि ! योगचक्षुषा प्रतापं पश्यन्ती त्वमेव कथय, कुत्रासौ मे प्रतापः ?

योगिनी—पश्य । सोऽयं प्रतापोऽनेनैव मार्गेणोपगच्छति

( इति दूराद्दर्शयित्वा ) 'अञ्जलिपूरितवसुभिरस्य हत'

( इत्यादि गायन्ती नि सृता । )

भामा०—आ ! सेयं मम मातृतुल्या पूज्या महाराज्ञी ।

पश्योर्ध्वं पदमुन्नमय्य सहसा यान्ती क्वचिच्छार्करे
दीप्ताङ्गारमिवाङ्गुलीषु पतितं ग्रावाणुकं सुस्थिरम् ।
भूमेस्तापवशेन चञ्चलतरा निष्काशितुं चाक्षमा
स्थातुं न व्रजितुं न च प्रभवति स्वामिन्यसौ विह्वला ॥७॥

---

प्रयाति । कथमेवं गच्छतीत्यर्थ । मे मम वसुभि.—बहुतरवनै॰, किं स्यात्-किं भवेत् । न किंचिद्धनेन प्रयोजन सेत्स्यतीत्यर्थ । वा—अथवा, सुतेन—पुत्रेण किमु । तेनापि न किंचित्प्रयोजनमित्यर्थ । वा—अथवा, प्राणैश्च किं फलम्, तद्गमने सति प्राणा अपि निष्फला एव । 'तदेतद्वित्तात्प्रेय पुत्रात्प्रेयोऽन्यस्मात्सर्वस्मात्प्रेयो यदयमन्तरतरात्मा' इत्यात्मनोऽपि निष्फलत्वे हेतु दर्शयति—यदि व्रजन्त—गच्छन्त प्राणेशं—प्राणनाथ त प्रतापम्, अभित निरोद्धुं क्षमः॰ समर्थ न स्याम्, तर्हि मे जीवनेनापि न फलमित्यर्थ । एतेन प्रतापस्य प्राणेभ्योऽप्यधिकप्रियत्व व्यज्यते ॥६॥

अथ भामागुप्त प्रतापपत्न्या गतौ घर्मदु.खं दर्शयति—**पश्येति** । पश्य, क्वचिच्छार्करे—वालुकामयप्रदेशे पदम् ऊर्ध्वम् अत्यन्तम् उन्नमय्य स्वकीय चरणमत्यन्तमुन्नत कृत्वा सहसा यान्ती—गच्छन्ती, असौ स्वामिनी दीप्ताङ्गारमिव प्रज्वलदग्ने अङ्गारमिव अङ्गुलीषु—अङ्गुलिमध्ये पतित सुस्थिर दृढतया तत्रैवास्थितं ग्रावाणुक-पाषाणकणिका भूमेस्तापवशेन अत्यन्तभूमिसतापात् चञ्चलतरा अत एव निष्काशितुम् अक्षमा, तन्निष्काशन स्थित्वैव संभवति, चञ्चलतरत्वे स्थितेरभावात् । एवं च विह्वला—अतिदु ख-वशादुद्विग्ना असौ स्वामिनी न स्थातु न च व्रजितु प्रभवति । नैव समर्था भवतीति भाव ॥७॥

अयं प्रतापः—

रोषारुणविशालाक्षस्तान्तस्वान्तः प्रसन्नधीः ।
विचारयन्निव हृदा मन्दं मन्दं व्रजत्यसौ ॥ ८ ॥

भामा०—( सहसोपसृत्य ) जयतु जयतु महाराजः ( इति पादयो पतति । )

( सर्वे एकतो वृक्षच्छायायामुपविशन्ति । )

प्रता०—अहो कोशाध्यक्षो भामागुप्तः ! कथय, अपि क्षेमं ते सपरिवारस्य ।

भामा०—( पादौ गृहीत्वा ) भवता परित्यक्तस्य कुतो मे क्षेमं स्यात् । ( इति रोदिति )

( प्रताप· किञ्चिद्विचारयन्निव मौनमास्थित । )

चन्दा०—कोशाधिपते ! इदानीं कमलासंकोचवशादप्रतिपालितचतुरङ्गसैन्यचक्राः स्वातन्त्र्यदेवताराधनार्थं सिन्धुप्रान्ते जिगमिषवो महाराणा प्रतापा·, तदनुगामिनो वयं च ।

भामा०—महाराज ! युष्मदीयकोशे चतुष्कोटिपरिमितं धनमस्ति । तेन

---

अथ भामागुप्त प्रतापमवलोक्य वर्णयति—रोषारुणेति । रोषेण अरुणे–रक्तवर्णे, विशाले–दीर्घे, अक्षिणी यस्य स तथा । तान्तं–खेदयुक्तं स्वान्त–मनो यस्य स तथा । प्रसन्ना धी –कर्तव्यज्ञानविषयिणी बुद्धिर्यस्य स तथा । मनस खेदयुक्तत्वेऽपि कर्तव्यविषये उत्साहसद्भावादस्य शौर्यशालित्व द्योत्यते । असौ प्रताप हृदा–मनसा विचारयन्निव मन्दं मन्द व्रजति । प्रायशो विचारदशायामेवमेव पुरुषश्चलतीति भाव ॥८॥

कमलेति । इदानीमस्मिन् काले आपत्तिदशाया कमलाया–लक्ष्म्या· संकोचवशात्, अप्रतिपालितो द्रव्यादिदानेन न स्वायत्तीकृतश्चतुरङ्गसैन्यचक्रश्चतुरङ्गसैन्यसमूहो यैस्ते एवंविधा महाराणा प्रतापा । अथ चेदानीं वसन्तऋतौ कमलानामसंकोचवशात् सिन्धुप्रान्ते तत्र कमलाना बाहुल्येनोपलब्धे स्वातन्त्र्येण तत्र कालयापनार्थम्, अथ च स्वतन्त्रताया अधिष्ठायकदेवपूजार्थं जिगमिषव –गन्तुमिच्छुका । 'सनाशंसभिक्ष उ·' इति उप्रत्यय· ।

प्रोल्लासिश्रिप्रहरणलसद्गाढपुष्टोन्नताग्रो-
त्तुङ्गस्फूर्जद्भुजपरिवृढा धैर्यशौर्योद्धुरीणाः।
नव्योन्मीलद्बहुलबलिनः सिद्धलक्षाः सहस्रं
पञ्चाशत्स्युस्तव भटगणास्त्रिंशदब्दान् ध्वजिन्याम्॥६॥

प्रता०—नाहं परकीयधनेन सैन्यं साधयिष्ये।

भामा०—महाराज! नैतत्परकीयम्, किन्तु युष्मत्कृपापात्रैरस्मदीयपूर्वजै राज्यकरसंचितं युष्मदनुचरैर्विलुण्ठ्यानीतमिति च, सर्वमपि कोशागारे निहितमिति युष्माकमेव।

सेना०—युज्यते चैवम्।

चन्द्रा०मन्त्री—एतद्यौष्माकीणमेव। एतेन पञ्चाशत्सहस्रैर्वीरैर्वयं युगपदाक्रम्य सर्वमपि रिपुबलं नाशयिष्यामः। स्वल्पेनैव कालेन सर्वाण्यपि दुर्गाणि परावर्तयिष्यामश्च।

प्रता०—एतद्वंशपरंपरोपार्जितमित्यस्यैव सर्वम्।

---

अथ भामाशाहः स्वकोशद्रव्यपरिमाणं कार्यद्वारा प्रदर्शयति—**प्रोल्लासीति**। प्रोल्लासिनी—देदीप्यमाना श्रीर्येषां तानि तथाभूतानि यानि प्रहरणानि तैर्लसन्तः—शोभमाना गाढाः—पुष्टाः उन्नताग्राः—उत्तुङ्गाः स्फूर्जन्तः आस्फालने वज्रनिर्घोषमिव कुर्वन्तो ये भुजास्तेषां परिवृढाः स्वामिनः, तथाभूतभुजायुक्ता इत्यर्थः। तथा धैर्यशौर्ययोः उत् ऊर्ध्वं यथा स्यात्तथा धुरां वहन्तीति धैर्यशौर्योद्धुरीणाः, नव्याः नवीनयुवावस्थोपेताः, यद्वा-नव्यं—नवीनं यद् उन्मीलद् बहुलबलं तदस्ति येषां ते। तथा सिद्धलक्षाः, सिद्धं लक्षं येषां ते। अप्रतिहतबाणशक्तय इत्यर्थः। एवंभूताः पञ्चाशत्सहस्रं भटगणाः. त्रिंशदब्दान्—त्रिंशदब्दपर्यन्तं 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। तव ध्वजिन्याः—सेनायाः स्युः। पूर्वं दशसहस्रेणैव भटैर्युतो भवान् विजितप्रायः आसीत् इदानीं तु पञ्चाशत्सहस्रैर्भटैर्युतो भवानवश्यं विजेष्यते इति भावः॥६॥

**युज्यते** इति। सेनापतिर्विलुण्ठ्यानीतमित्यवगत्य युज्यते इत्यनेन राज्ञः प्रतापस्यैवेदमिति समर्थयति।

भामा०—अस्माकं भवेदेतद्, युष्माकं वेति विवादः परिहीयताम्। एतत्स्वातन्त्र्यदेवपूजार्थं भवत्पादे निधीयते। यदि भवानेतन्न स्वीकरोति तदाऽहमनशनेन प्राणास्त्यक्ष्यामि।

यवनाधिगतौ ध्रुवे विनाशे
सुखपूर्वेण कथं न तं विदध्याम्।
यदि वः करुणालवोऽपि शिष्टो
रिपुमास्कन्द्य तदा प्रजां भजध्वम्॥ १०॥

मन्त्री—महाराज! भवदर्थमेतन्माऽस्तु। परं विधर्मिभ्यः प्रजाया धर्मरक्षार्थमेतद्दीयते अयमपि भवदीय एव। अन्यथाऽयं प्राणांस्त्यक्ष्यतीति स्वीक्रियताम्।

प्रता०—( भामाशाहस्य बाहु गृहीत्वा ) कोशाधिपते! स्वातन्त्र्यदेवताराधनार्थमेतत्स्वीकरोमि। एतेन मेवाडे चिरस्थायिनी स्वतन्त्रतां स्थापयिष्यामि।

उप्ता या बलिना लता हरिपदे सत्ये युगे स्वाध्वरे
सिक्ता सा शिविना दयासलिलतस्त्रेतायुगस्यान्तरे।

---

अथ भामा इतिकर्तव्यता बोधयति—**यवनेति**। यवनस्य—यवनराज्यस्य भवद्गमनानन्तरम् अधिगतौ—सर्वत्रैव प्राप्तौ सत्या विनाशे ध्रुवे—निश्चिते सति। न खलु तद्राज्ये विधर्मिससर्गेण वय जीविष्याम इति निश्चये सति सुखपूर्वम् तमात्मनो विनाश कथं न विदध्याम्। अवश्यमेव सुखपूर्वेणैव अनशनादिना आत्मत्याग कर्तव्य इत्यर्थ.। यदि व.—युष्माक करुणाया लवोऽपि अणुमात्रसम्बन्धोऽपि शिष्ट अस्ति। यदि मादृशस्य जनस्य रक्षणे तव हृदये दयाऽस्ति तदा रिपुमास्कन्द्य युद्धोद्योगेनेति भाव, प्रजा भजध्वं—सेवध्वम्, प्रजारक्षण तत्सेवैवेति भाव ॥१०॥

**अयमपीति**। अयमस्मल्लक्षणो जन।

अथ प्रतापो लतारूपकद्वारेण तद्दानं दर्शयति—**उप्तेति**। या दानर वरूपा लता बलिना हरिपदे—विष्णोश्चरणे स्वदेहस्यापि दानेन त्रिपदमात्र-

कर्णैः पल्लवितां विधातुमभवच्छक्तश्च तां द्वापरे
सेयं साध्वमृतैः कलौ फलवती भाम्ना त्वया साध्यते॥११॥

मन्त्री—भामन् ! लोकोत्तरमिदं ते दानकर्म ।

लोके ख्यातिधिया ददाति कुशल कश्चित्स्वकान्भावय-
न्नन्यः स्वर्गसुखाय वेदविदुषे दत्ते स्वलाभेच्छया ।
राज्ञो रोषभिया परोऽपि ददते स्वोपायनं बोधयन्
द्वित्राः सन्ति नवा क्वचित्तव समा यच्छन्ति ये निःस्पृहाः॥१२॥

---

पृथिव्या दानेन स्वाध्वरै—स्वकीययज्ञे सत्ये युगे उप्ता—बीजरूपेण आरोपिता, सा शिविना—तन्नामकेन राज्ञा त्रेतायुगस्य अन्तरे—त्रेतायुगमध्ये दयासलिलत —दयारूपसलिलेन सिक्ता, कर्णो द्वापरे ता लता पल्लविता—पल्लवयुक्ता च विधातु शक्त समर्थ अभवत्, सा इय प्रत्यक्षतया विद्यमाना दानरूपा लता अमृतै अयाचितै. 'अमृत स्यादयाचितम्' इति मनु । 'द्वे याचितायाचितयोर्यथासख्यं मृतामृते' इत्यमरश्च । साधु सम्यक् प्रकारेण कलौ भाम्ना त्वया फलवती—फलयुक्ता साध्यते । अधुना दानलता फलवती याता । बलिना सार्द्धत्रिपदीमात्रपृथिव्या दाने सर्वस्व दत्त, पर तु सर्वस्वदाने पूर्वत एव नाध्यवसाय आसीत् । एव शिविनाऽपि स्वल्पेनैव कार्यं सेत्स्यतीति ज्ञात्वा स्वल्प स्वल्प स्वमास ददता बहुतर स्वमास दत्तम् । कर्णोऽपि कवचकुण्डलादिदानेन तथाध्यवसाययुक्त आसीत् । त्वं तु अयाचित सर्वस्वमेव ददासीति विलक्षण सर्वोत्तमं ते दानमिति भाव , अत एव त्वया दानलता फलवती कृतेत्यर्थ ॥११॥

अथ मन्त्री भामान कथयति—**लोके** इति । कश्चित्कुशल लोके—संसारे, ख्यातिधिया—स्वप्रसिद्धिबुद्धया, स्वकान्स्वकीयान् भावयन् अयमस्मदीय इति चिन्तयन्नेव ददाति । अन्य. स्वर्गसुखाय एतद्दानेन स्वर्गसुख भविष्यतीति स्वलाभेच्छया—आत्मलाभकाङ्क्षया वेदविदुषे विप्राय दत्ते । दानफलस्यात्मगामित्वादात्मनेपदम् । परोऽपि तदतिरिक्तोऽन्योऽपि राज्ञो रोषभिया स्वोपायन बोधयन् इदमुपायन दीयते इति कथयन् राज्ञे यद्ददाति तदपि राज्ञो रोषभयादेव ददते नतु स्पृहाशून्यत्वेनेत्यर्थ । तव समा —तव सदृशा

भामा०—इयं महती भवतामनुकम्पा, यदेतेन सर्वानप्यस्मान् विधर्मिभ्यस्त्रायन्ते ।

प्रता०—सेनापते ! त्वं तावत्पञ्चाशत्सहस्राणि वीरभटान्सज्जीकृत्य पञ्चधा विभज्य आक्राम, अमरसिंह ! त्वमपि गुहसहितो म्लेच्छसैन्यं विनाशय । अहमपि तिर्यग्मार्गेणाक्रम्य मानं निग्रहीष्यामि ।

सेना०—यथाऽऽज्ञापयन्ति भवन्तः ( इति तथा कर्तुं निष्क्रामति । अमरसिंहोऽपि उपमन्त्रिसहितो निष्क्राम्यति । प्रतापोऽपि मन्त्रिरक्षाया कलत्रादिकं परित्यज्य निष्क्राम्यति )

पटीक्षेप ।

( आगराया मन्त्रिद्वितीय स्थितोऽकबरश्चिन्तयति । )

अक०—मन्त्रिन् ! श्रूयते अद्यश्व. प्राणपणेन मानः प्रतापं निग्रहीतुमभिलषति ।

मन्त्री—संभाव्यते अपमानभिया मानस्तथाऽऽचरितुं सन्नद्धः स्यात् , परं तु प्रतापोऽपि प्रताप एव ।

क्वासौ प्रतापः क्व च वः प्रतापः
क्व भिल्लरक्ष्यः क्व बलं भटानाम् ।
क्व तस्य यत्नः क्व चमूप्रयत्न-
स्तथापि निघ्नत्वमयं न याति ॥ १३ ॥

---

'तुल्यार्थैरतुलोपमाभ्या तृतीयाऽन्यतरस्याम्' इति षष्ठी । द्वित्रा –द्वौ वा त्रयो वा इति द्वित्रा सन्ति नवा । द्वित्रेष्वेव सदेह , अधिकाना तु कथैव । ये नि स्पृहा –सर्वथा आकाङ्क्षारहिता यच्छन्ति-ददति । नैकोऽपि त्वत्सदृशो नि स्पृहो दातेति भाव ॥१२॥

मन्त्री प्रतापस्य साधारण्येपि लोकातिशायित्वं दर्शयति—क्वासाविति । असौ साधारणोऽस्मदादिग्राह्य प्रताप क्व, व युष्माक प्रताप ऐश्वर्यं क्व । पूर्वत्र असावित्येकत्वेन तस्य तुच्छत्वम् , व इत्यत्र बहुत्वेन युष्मदैश्वर्यस्य लोकातिशायित्वेन च तुल्यतायामन्तरातिशयो बोध्यते । भिल्लेन भिल्लैर्वा भिल्लजातीयै रणकलाशून्यैरशिक्षितै रक्ष्य , क्व । एतेन सुगमतया तस्य

अक०—श्रूयते मेवाडं परित्यज्यासौ सिन्धौ प्रयातः ।

मन्त्री—यद्येवं भवेत्तदा दूरोत्सारितस्तव कण्टकः स्यात्परं विजिगीषूणां बहुविधाः प्रकारा भवन्ति । न जाने किमप्यस्य प्रयाणे रहस्यं स्यात् ।

( तत. प्रविशति मानसिंह । )

मानः—विजयतां विजयतां महाराजः !

अक०—क गतोऽसौ प्रतापः ?

मानः—मेवाडं परित्यज्य सिन्धौ प्रयात इति श्रूयते ।

अक०—दूरोत्सारितः कण्टको विनाशित एव । यतः स्वयमसौ प्रचण्डतरमार्तण्डप्रखरकरोत्तापितस्य सलिलानुपलब्धिविशुष्कतालुरसनाकण्ठोष्ठमुखविवरस्य पुत्रकलत्रादिसकलकुटुम्बस्य नाशे विनष्टो भविष्यति ।

मन्त्री—सर्वमपि युज्यते । परमसौ विजिगीषोरिव कदाचित्प्रकारः स्यादित्यपि संभाव्यते एव ।

एकाकी स्वबलं विहाय सहसैवाक्रम्य शत्रोश्चमूं
मुक्त्वा तां च पलायितो यदि भवेद् हृद्यं ततो मीयते ।

---

ग्राह्यत्वं सूच्यते, व युष्माक भटाना—योधाना बलं—सैन्य सामर्थ्यं क्व । एतदपि सामानाधिकरण्य नैव घटते । अथ च तस्य एकाकिन प्रतापस्य यत्न क्व । व युष्माक चम्वा —सेनाया. प्रयत्न क्व । तत्र तु एकस्यैव यत्न इह तु सेनाया इत्यनेनासख्यात—सैनिकाना प्रयत्न, तत्र तु यत्न एव । इह तु प्रयत्न, प्रकृष्टो यत्न प्रयत्न' इति सर्वथा तद्ग्रहणे सुकरत्व बोध्यते । व इत्यनेन सह चम्वा नित्यसाकाङ्क्षत्वात् देवदत्तस्य गुरुकुलमितिवत्समास । तथापि सर्वथा तद्ग्रहणस्य सुकरत्वेऽपि अयं प्रताप निघ्नत्वं व युष्माकमधीनता न याति । नाद्यापि त्वदधीनतामयं प्राप्नोतीति भाव ॥१३॥

मन्त्री प्रतापस्य सिन्धौ गमने किञ्चिद्रहस्यमेवेति दर्शयति—**एकाकीति** । कश्चिद्वीर स्वबलं—स्वसैन्यं विहाय ततो निष्क्रुष्य सहसैव शत्रोश्चमू-

वीरः कातरवत्त्यजन्निजभुवं काश्चित्क्रियामीहते
दुर्ज्ञेयं विदुषो नटस्य कृतिवत्कृत्यं जिगीषोरिदम् ॥ १४ ॥

मानः—एवमपि संभाव्यते, परं तु प्रतापस्तु पलायित एव।

मन्त्री—अहमभिलषामि, सत्याः सन्तु ते गिरः!

(तत प्रविशति सेनात समायातश्चर ।)

चर—जेदु जेदु महाराओ।

जयतु जयतु महाराज ।

अक०—कुत्र प्रताप. पलायित इति काश्चिदुदन्तः समागतः?

चरः—किरणु खलु तस्स उदन्तस्स कहा, सव्वं चेव णट्ठं।

किन्तु खलु तस्योदन्तस्य कथा, सर्वमेव नष्टम्।

अक०—किं प्रतापकुटुम्बम्?

चरः—णहि णहि तुम्हाणं बलम्।

नहि नहि युष्माक बलम् ।

अक०—किमसौ कथयति?

चरः—सव्वं सच्चं चेव कहेमि।

सर्वं सत्यमेव कथयामि।

अक०—केनास्मद्बलं विनाशितम्?

चरः—ससेरणेन पदावेण विस्सओ क्कमियं पुणो।

ससैन्येन प्रतापेन विश्वत आक्रमितं पुन ।

तुह चेव बलं सव्वं णासिअं खणमत्तओ ॥ १५ ॥

तव चैव बलं सर्वं नाशितं क्षणमात्रत ॥ १५ ॥

---

माक्रम्य ताम् आस्कन्द्य पुनस्ता शत्रुसैन्यं च मुक्त्वा परित्यज्य यदि पलायितो भवेत् एव दशा यदि भवेत् ततस्तदनन्तरं तदा वा ह्वयमनुमीयते। अस्त्यत्र किमपि रहस्यं यस्मादेवमसौ विदधातीत्यनुमीयते। वीर—प्रताप, कातरवत् निजभुवम्—आत्मपृथ्वीं त्यजन् काश्चित् क्रियामीहते। विजिगीषोरिदं कृत्यं विदुषो नटस्य ऐन्द्रजालिकस्येत्यर्थ कृतिवत् दुर्ज्ञेयम्। दु खेन महता प्रयत्नेन ज्ञातुं शक्यमित्यर्थ ॥१४॥

अक०—( मानाभिमुख पश्यन् । ) किमसौ ब्रवीति ? अये किमिदं सत्यं ब्रवीषि ?

चरः—सव्वं सच्चं चेव। कहं खु अम्हारिसो मिच्छा कहिस्सइ।
सर्वं सत्यमेव। कथ खलु अस्मादृशो मिथ्या कथयिष्यति।
( तत प्रविशति वैरामसेनापतिप्रेषितश्चर । )

से० चरः—(सहसोपसृत्य) जयतु जयतु महाराज'। हा सर्वेऽपि हताः।

अकबरः—कथम् ?

से० चरः—सहसा प्रतापसैनिकैराक्रम्य सर्वेऽपि ते सैन्यभटा विनाशिताः, न जाने कुतस्तदसंख्यातं सैन्यमायातम्। ( पुना रुदन् पादयोर्निपत्य ) महाराज ! युष्मत्सेनापतेः पत्नी युष्माकं धर्मभगिनी सखीभिः सहितैव प्रतापभटैर्निगृहीता।

अक०—कथमिदमश्राव्यं शृणोमि ?
( स्वगतम् )

स्वसा मदीयैव करे रिपोर्गता गतैव मे मूर्तिमती यशस्विता।
न चास्ति तस्याः पुनराप्तिकारण जितोऽहमेतेन निपातित.पदे॥१६॥

( प्रकाशम् ) कथं सा निगृहीता ?

से० चरः—प्रतापभटैः सहसाऽऽक्रम्य सकले युष्मत्सैन्ये विनाशिते आरक्षकरक्षिता सखीभिः सममागच्छन्ती सेनापतेः पत्नी मार्गे एकाकिना गुहेनाक्रम्य अन्तरैव निगृहीता, आरक्षकाश्च विनाशिताः।

अक०—( गुह लक्षीकृत्य ) साधु भिल्लराज ! साधु।

---

अकबर स्वहृदये विचारयति—**स्वसा** इति। मदीयैव नतु सम्बन्धिनोऽन्यस्य वा स्वसा- भगिनी रिपो प्रतापस्य करे हस्ते गता। यद्वा—मदीया स्वसैवेति सम्बन्ध । तथा च मे—मम मूर्तिमती साक्षान्मम स्वस्वरूपेण देहधारिणी यशस्वितैव गता। तस्या पुन. आप्तिकारण पुनरागमनहेतुर्न चास्ति नैवास्तीत्यर्थ.। एतेन कारणेन जित. अहं पदे निपातित , जितोऽप्यहं पदे निपातनात्सर्वथा पराजित एवेत्यर्थ । यद्वा—अहमेतेन जित., पदे निपातितश्च ॥१६॥

कश्चिद्वेतनलाभतो रणभुवं वीरः समागच्छति
क्षेमं चाभिलषन् स्वकीयमभितो भूपात्परो वाञ्छति ।
अन्यः पूर्वसुखोपभुक्तविषयो भोगाशयैवेहते
कोऽन्यस्त्वत्सदृशः प्रभोः परमया भक्त्यैव यः सेवते ॥१७॥
यद्वा सर्वमपीदमस्मद्दुर्विलसितस्य फलमुदयते ।
चिकीर्षते यद्दुरितेन पूरुषस्तदेव तत्पापफलेन सृज्यते ।
परस्य वाञ्छन्नशुभं प्रहिं खनन् पतत्यसौ तत्र विधेर्विलासतः॥१८
( पुन स्मृत्वा ) आः ! दारुणोऽपमानसंतापः ।
नो शान्तिः कथमप्युपैति मनसो दु.खं समुज्जृम्भते
चित्तं चोद्विजते त्रपाभरवशादात्मा क्षितौ लीयते ।

---

अथ अकबरो गुह भिल्लराज लक्ष्यीकृत्य कथयति—**कश्चिदिति** । कश्चिद्वीर वेतनलाभतो—मासिकवृत्तिलाभात्, रणभुव-संग्रामभूमिं, समागच्छति—योद्धु प्राप्नोतीत्यर्थ । पर —कश्चिदपरश्च, अभित —सर्वतोभावेन, स्वकीय क्षेमम्—आत्मकल्याण, भूपात्—राज्ञ सकाशाद्, अभिलषन्—इच्छन्सन् रणभुव वाञ्छति—तत्र योद्धु गच्छतीत्यर्थ । पूर्वं प्रथम सुखेन उपभुक्तो विषय सर्वविधोऽभिलाषो येन स तथाविध अन्य· कश्चिद्वीरो भोगाशयैव भोगतृष्णयैव रणभुवम् ईहते—तत्र संग्रामभूमौ गन्तु चेष्टते । त्वत्सदृशो-ऽन्य कोऽस्ति य प्रभो स्वस्वामिनो राज्ञ परमया—उत्कृष्टया केवलया वा भक्त्यैव रणभुव सेवते । वेतनलाभादिनिरपेक्ष सन् यत्त्व सग्रामभूमिं सेवसे एषा ते अलौकिकी स्वामिभक्तिरित्यर्थ ॥१७॥

अथ स्वकीय कर्म विचारयन् कथयति—**चिकीर्षत** इति । पूरुष यत्कर्म दुरितेन—पापकर्मणा हेतुना, चिकीर्षते—अन्यस्मै कर्तुमिच्छति, तदेव कर्म तत्पापफलेन—तस्य कर्मण पापफलोदयेन सृज्यते—स्वत एव उत्पद्यते इत्यर्थ । सृजिरकर्मको दैवादिकश्च । तदेव दृष्टान्तेन समर्थयते—परस्य—अन्यस्य अशुभमनिष्टं वाञ्छन्—अभिलषन् प्रहिं—कूपं खनन् । अमुक. पुरुष अत्र कूपे पततु इत्यभिलाषेण कूप खनन् असौ कूपखनक पुरुषो विधेर्ब्रह्मण प्रारब्धस्य वा विलासत तत्र कूपे पतति । मया तत्कलत्रग्रहणेन तज्जयार्थं प्रयत्नो विहित इति ममैव सेनापते कलत्र गृहीतमित्यह पराजितश्चेति भाव ॥१८

अस्मत्सैन्यपतेर्वधूः सतनया वन्यैर्यतो गृह्यते
तस्मादेव मया स्वकीयविजये वाञ्छा परित्यज्यते ॥१६॥

( पुनर्विमृश्य ) अलं कातर्येण, तासामुद्धारः कर्तव्यः ।

( मनसि ) किमसौ मानस्तेनेदानीं मिलितः यन्मां प्रतारयन् योग्यान्मे भटान्नाशयति, किं वा तद्गतिमवगत्य स्वयमेव पलायितः ।

( प्रकाशम् ) मानसिंह ! किमिदं जातम् ?

मानः—अस्मदागमनानन्तरं वार्षिकमण्डूकवन्न जाने कुतस्तत्सैन्यं संजातम् ।

( तत प्रविशति लाभपुरादायातश्चर । )

चरः—जयतु जयतु महाराज. ।

---

आ इत्यत्यन्तदु खपरामर्शे । अपमानसताप दारुण –अत्यन्तदु ख–जनक । तदेव दर्शयति—नो शान्तिरिति । कथमपि आमोदप्रमोदादिना केनापि उपायेनापि मनसश्चित्तस्य शान्तिर्नो नैव उपैति चित्तस्य शान्तिर्न प्राप्नोतीत्यर्थ । दु ख समुज्जृम्भते–सभूय आपाततो वर्द्धते । चित्त च–विचारधारणासमर्थ चेतश्च, उद्विजते–उद्वेग प्राप्नोतीत्यर्थ । तथा त्रपाभरवशात्–लज्जाया आधिक्यात्, आत्मा क्षितौ–पृथिव्या नाशे वा लीयते–कथमह मृत स्यामिति विचारेण पृथिव्या लीनो भवामीत्यर्थ । तत्र हेतु दर्शयति–यतो यस्मात्कारणात् अस्मत्सैन्यपते वैरामनामकस्य मम सेनापते वधू सतनया–तनयया सहितेति सतनया कन्यायुक्ता वन्यैर्वन्यचरै प्रतापसैनिकैर्गृह्यते, तस्मादेव कारणात् मया स्वकीयविजये वाञ्छा परित्यज्यते–अहं विजेष्ये इत्यभिलाष सर्वथा परित्यज्यते। य स्वपक्षिण कलत्रमपि रक्षितु न शक्नोति स कथ शत्रु जेष्यतीति भाव ॥१६॥

---

१—'खघथधभा ह ' इति भकारस्य हकारे, 'क्गचजतदपयवा प्रायो लोप ' इति पकारलोपे 'शेषं संस्कृतात्' इत्युक्तेः, 'आद्गुणः' इति गुणे 'लाहोर' इति सिद्धम्। यत्तु 'लवपुराल्लाहोर इति निष्पद्यते' इति कैश्चिदुच्यते तत्तेषा प्राकृतव्याकरणानभिज्ञताया विजृम्भणमेव ।

अक०—किमस्ति ?

चर —महाराज ! लाभपुरसामन्तो युष्माकं परिपन्थी संजातः, स चाक्रामन्नित एवाभिगच्छति ।

अक०—अपमानो मया पूर्वमश्रावि दृषदात्मना ।
इदानीं श्रूयते राज्यच्छेदोऽपि किमतः परम् ॥ २० ॥
कथय अन्यदपि यदनिष्टं स्यात्, हृदयमवलम्ब्य सर्वमपीदानीं श्रोतुं सन्नद्धोऽस्मि ।

( पुनर्विमृश्य )

सेनापतेराप्तकुटुम्बवर्गं पूर्वं रिपोः किन्तु समुद्धरेयम् ।
किं वा द्विषन्तं कलयेऽभियान्तं सामन्तमेनं खलु दण्डयेयम् ॥२१॥
परं नेदानीं कालातिपातः कर्तव्यः। उभयमपि संपादनीयमेव ।

( तत प्रविशति शाहवाज )

शाह०—जयतु जयतु महाराजः !

अक०—त्वं यथेच्छं सैन्यं सज्जीकृत्य प्रतापं निगृह्णीयाः ।
ससूनुमेनं मदुर्विदग्धं मलिम्लुचं क्षीणबलं द्विषन्तम् ।

---

अथ अकबरो राज्यस्य मध्ये एव समुत्पन्नं विद्रोहाग्निमाकर्ण्य कथयति—**अपमान** इति पूर्वं–प्रथमं दृषदात्मना मया पाषाणवदात्मानं विधाय अपमान अश्रावि–श्रुत । इदानीम् अधुना राज्यच्छेदोऽपि श्रूयते । लाभपुराधिपति स्वतन्त्रो जात इति तावन्मात्रं विच्छिद्यत इति भाव । अत परं किम्–अत परमधिकमनिष्ट किम् ? न किमपीत्यर्थ ॥२०॥

पुनर्विमृष्य कथयति—**सेनापते**रिति । पूर्वं–प्रथम, सेनापते –वैरामनामकस्य सेनानायकस्य, आप्तं–श्रेष्ठ व्यभिचारादिदोषशून्य, कुटुम्बवर्गं–कलत्रसुतादिक, रिपो सकाशात्समुद्धरेयम् । किन्तु इति वितर्के । किं वा द्विषन्त–द्वेषं कुर्वन्तं कलये । संग्रामाय, अभियान्तम्–अभिमुखमागच्छन्तम्, एन–लाभपुरसंबन्धिनं सामन्तं दण्डयेयम् ॥२१॥

उभयमपि संपादनीयमेवेति सिद्धान्त ।

अथ अकबर शाहवाजनामानमपर स्वसैनिकं समाज्ञापयति—**ससूनु**-

खलप्रियं याचकवद् भ्रमन्तं निहत्य तस्य प्रमदां हरध्वम् ॥२२॥
संभावयाम्येवं कृतौ साम्यसंपादने स्वान्ते शान्तिः स्यात्।
मानसिंह! त्वमपि स्वसैन्यं सज्जीकृत्य लाभपुरसामन्तमुपशमय, अहमपि देहलीपत्तने राज्यस्थानपरिवर्तनं विधाय अनुपदमेव सज्जितसैन्यः समेष्यामि।

मन्त्री—महाराज! कस्मादिदं राज्यस्थानपरिवर्तनं क्रियते?

अक०—कदाचिद्विवृद्धः प्रताप आक्रामन्ननार्यमाचरेत्।

मन्त्री—इदं तु नैव संभाव्यते, परं तु अनिष्टसंभावनया पूर्वतस्तथा करणे न काचित्क्षतिः।

(ततो मानप्रभृतयस्तथा कर्तुं निष्क्रामन्ति।)

अक०—दौवारिक! अहमिदानीं विश्रान्तिमभिलषामीति विश्रान्तिस्थानमादेशय।

दौवा०—इदो आगच्छदु महाराओ।
इत आगच्छतु महाराज।

(इति निष्क्रान्ता सर्वे।)

इति श्रीमहामहोपाध्यायमथुराप्रसादकृतौ वीरप्रतापनाटके षष्ठोऽङ्क।

---

मिति। सूनुना—पुत्रेण सहित, मदेन—अभिमानेन दुर्विदग्धम् आत्मशौर्याभिमानिनं, मलिम्लुच—चौर, द्विषन्तं—मया सह द्वेषं कुर्वन्त, खलप्रियं—खलाना—दुष्टाना प्रियं, खल प्रियो यस्येति वा। याचकवद्—भिक्षुकवद्, भ्रमन्तम्—इतस्ततो गच्छन्तम्, एनं—प्रतापं, निहत्य तस्य—प्रतापस्य, प्रमदा—स्त्रियं, यूयं हरध्वम्। अत्र आदरार्थत्वाद्बहुवचनम्॥२२॥

इति श्रीमहामहोपाध्यायमथुराप्रसादकृतौ वैजयन्तीटीकाया
षष्ठोऽङ्क समाप्त।

# सप्तमोऽङ्कः ।

( इहोपत्यकाया मन्त्रिद्वितीय स्थित प्रताप परामृशति )

( तत प्रविशति म्लेच्छराजसेनापतिपत्नीमादाय उपसेनापतिसहितो गुह ।)

**उपसेनापतिः—**

**याऽस्माकं करपञ्जरे निपतिता त्वद्वैरिसेनापतेः**
**कान्ता कान्तपदारविन्दवदना बन्धूकबिम्बाधरा ।**
**खेलच्चञ्चलखञ्जरीटनयना कुन्देन्दुमन्दस्मिता**
**सेयं त्वच्चरणागता कृतिविधावाज्ञां समुद्वीक्षते ॥१॥**

**प्रतापः—अलं परदारवर्णनेन ।**

**शिशोदियाकुलोद्भूतः परकान्तां न वीक्षते ।**
**परापवादसदृशं तद्वर्णनमुपेक्षते ॥ २ ॥**

---

येति । याऽस्माक करपञ्जरे—हस्तरूपे पञ्जरे, एतेन सर्वथा परतन्त्रत्व तस्या व्यज्यते । निपतिता—अनायासेन स्वयमेवागता । कान्ते—मनोहरे पदे यस्या सा, तथा अरविन्दमिव—कमलमिव, वदन—मुख यस्या सा तथा । बन्धूकं—बन्धूकपुष्पं, बिम्ब—बिम्बफलं, तद्वत् अधरो यस्या सा तथा । खेलन्—क्रीडा कुर्वन्, चञ्चलश्च य खञ्जरीटस्तन्नामक पक्षी तद्वन्नयने यस्याः सा, 'न क्रोडादिबह्वच' इति ङीष् निषिध्यते । कुन्देन्दुवत्स्मितं यस्या सा तथा । सा इयं प्रत्यक्षतया उपस्थिता त्वद्वैरिणोऽकबरस्य सेनापते कान्ता तव चरणयोरागता—त्वच्चरणागता सती कृतिविधौ—कर्तव्यविषये आज्ञा समुद्वीक्षते, किमियं करोतु इति भवतामाज्ञामिय प्रतीक्षते ॥११॥

अथ प्रताप आर्यधर्मानुसारेण तद्दर्शनादिक परिहरति—**शिशोदिया** इति । शिशोदियानामकक्षत्रियाणा कुले उद्भूत -उत्पन्न परकान्ता—परस्त्रिय न वीक्षते-नैवावलोकयति । 'परदारान्नाभ्युपेयाद्' इत्यभ्युपयान तु दूरापेतम् । शिशोदियाकुलोत्पन्नस्तु वीक्षतेऽपि नेत्यर्थ । परापवादेन सदृश—परनिन्दातुल्य तस्या परस्त्रिया वर्णनमुपेक्षते—परनिन्दामिव परस्त्रिया वर्णनमपि श्रोतुं नैवाभिलषतीत्यर्थ ॥२॥

तस्मादधुनैव ससुतां ससखीमेनामस्याः स्वामिसविधे नयस्व। मा स्वकीयजनविरहिता रात्रावेकाकिनी तिष्ठतु।
यतः—

परपुरुषपरीतां निर्जने सञ्चरन्तीं
बहिरपि च रजन्यामन्यगेहे वसन्तीम्।
बहुविधशपथैः स्वां शोभनां साधयन्तीं
महह पिशुनलोकास्त्वन्यथैवाक्षिपन्ते॥ ३॥

उ० से०—यथाऽऽज्ञापयति देवः (इति निष्क्रान्तः।)
(ततः प्रविशति प्रधानसेनापतिः।)

सेनापतिः—जयतु जयतु महाराजः!

प्रता०—विजेतुं कियदवशिष्टम्?

सेना०—न किञ्चिदवशिष्यते। चित्रपुरदुर्गं विहाय सर्वाण्यपि दुर्गाणि भवतामाधिपत्ये समागतानि। सर्वेष्वपि दुर्गेषु भवतां ध्वजाः समारोपिताः।

मन्त्री—चित्रपुरदुर्गविजये कियत्कालं प्रतीक्षितव्यम्?

सेना०—आज्ञासमनन्तरमेव वयं चित्रपुरदुर्गं विजेष्यामहे, परमशौर्यशालिनी उत्साहवती चास्माकं सेना।

---

अथ रात्रौ स्वजनरहितायास्तस्याः स्थितिं प्रतिषेधयति—**परपुरुषेति**। परपुरुषैः—स्वकीयातिरिक्तैः पुरुषैः, यद्वा-परस्य—शत्रोः पुरुषैः, अथवा परैः—युवावस्थामापन्नैरुत्कृष्टैः पुरुषैः परीतां युक्ताम्। निर्जने—जनसञ्चारादिरहिते स्थाने सञ्चरन्तीं, परपुरुषैः सह परिभ्रमन्तीमित्यर्थः। बहिरपि च—स्वगेहादतिरिक्ते स्थाने स्वग्रामातिरिक्ते स्थाने वा रजन्या-रात्रौ अन्यगेहे-अन्यस्य गेहे वसन्तीं—निवासं कुर्वतीम्। 'बहिरन्यगेहे' इदं ब्राह्मणश्रमणन्यायाद्वाऽवगन्तव्यम्। बहुविधशपथैः—दिव्याग्निप्रवेशादिभिः शपथैः स्वामात्मानं शोभनां-शुद्धां पापरहितां साधयन्तीं तदपि शुद्धत्वसिद्धावपि पिशुनलोकाः-परनिन्दका मूर्खजना अन्यथैव आक्षिपन्ते, तां दुश्चरित्रामेव कथयन्ति। तस्माद् यथा रात्रौ स्वगेहे एवासौ गच्छेत्तथा विधातव्यमित्यर्थः॥ ३॥

कि म्लेच्छराजमधुनैव हरेम गत्वा
कि वाऽपि चित्रपुरमेव नयेम जित्वा ।
मानोद्धतं स्वजनमेव सदा द्विषन्तं
मानं जयेम किमु गर्वमलं चरन्तम् ॥ ४ ॥

प्रता०—सेनापते ! चित्रपुरदुर्गेऽस्मत्पितृव्यः सगरस्तिष्ठतीत्यस्मदधिकार एवेति मा तावाच्चित्रपुरजयाय प्रयतताम् । म्लेच्छराजस्य चाभिमानं वयमेव चूर्णयिष्यामः । अतः केवलं मानस्य गर्वः प्रध्वंसितव्यः, इत्यामेरं माननगरं लुण्ठयध्वम्, यदि मानः समुपलभ्येत तदा सोऽपि बद्ध्वाऽऽनेतव्यः ।

सेना०—यथाऽऽज्ञापयति देवः ( इति निष्क्रान्त )

( मन्त्रिसहित प्रताप परिक्रामति । )

( पटीक्षेप )

( किंकर्तव्यताविमूढ इव मन्त्रिद्वितीयोऽकबरश्चिन्तयति । )

अक०—मन्त्रिन् ! इदानीं प्रतापः काममप्यनिर्वचनीयां शक्तिमापन्न इव प्रतिभाति । पश्य—

---

अथ सेनापतिः स्वशक्तिं प्रदर्शयन् कथयति—**किं म्लेच्छराजमिति** । किम् अधुनैव–अस्मिन्नेव क्षणे गत्वा म्लेच्छराज म्लेच्छाधिपतिमकबर हरेम–हठाद् गृहीत्वा आनयेम । रुक्मिणीहरणादिवत्सर्वसमक्षं हठादानयनेऽपि हृधातो प्रयोग । किं वाऽपि चित्रपुरमेव–चित्तोर इति लोकभाषाया प्रसिद्ध दुर्गं जित्वा नयेम–आनयेम । त्वदाधिपत्यबोधक तत्र त्वद्ध्वजारोपण कृत्वा तदुद्घाटनकुञ्चिकामानयेमेत्यर्थ । किमु किं वा मानेन–अभिमानेन उद्धत सदा स्वजनमेव स्वकीयक्षत्रियज्ञातिमेव द्विषन्त गर्वस्य मलं–किट्ट चरन्तं–भक्षयन्त मिथ्याभिमान कुर्वन्तम्, यद्वा–अल पर्याप्तमत्यन्तमित्यर्थ । गर्वं चरन्त-विदधत मान-मानसिंह जयेम । सर्वमपि वय कर्तुं शक्नुम, यदेवाज्ञापयिष्यसि तदेव करिष्याम इति भाव ॥ ४ ॥

शंभुः स्वयं जनयति ध्वजिनीं किमस्य
तत्रैव वा गणमुपानयते स्वकीयम् ।
येन क्षणेन निहतो मम वीरसंघो
दुर्गाणि चाप्यधिकृतानि सपर्वतानि ॥ ५ ॥

मन्त्री—नूनमयमिदानीं दैवीं शक्तिमापन्नः । कथमन्यथैकेन सर्वानारक्षकान्निहत्य सेनापतिपत्नी वन्दीकृता ।

( तत. प्रविशति सैन्यादायात सेनापति । )

सेना०—जयतु जयतु देवः !

अक०—किं प्रतापेन दासीकृतास्ता स्त्रियः ?

सेना०—शान्तं पापम् ! शान्तं पापम् ! तेन तु अनुपदमेव ताः सर्वा अपि सबहुमानं प्रेषिता । धन्योऽयमार्यो जनः परमौदार्यसंपन्नश्च । किं बहुना—

परस्त्रियं यो मनसापि नेक्षते स एव दासीं नु विधास्यते कथम् ।
चराचरं स्वप्रभया प्रकाशयन्न चार्यमोत्पादयते तमस्ततिम् ॥६॥

---

अकबर प्रतापस्य अनिर्वचनीया शक्तिं प्रदर्शयति—**किमिति** । किमिति विमर्शे । शम्भु एकलिङ्गेश्वर , स्वयम् अस्य ध्वजिनीं—सैन्य जनयति । मा मद्भक्त पराजित स्यादिति सेनामेव स्वप्रभावेणोत्पादयति । किं वा स्वकीय गणं-वीरभद्रादिक तत्रैव ध्वजिन्यामेव प्रतापसाहाय्यार्थं तत्सेनायामेव उपानयते—प्रापयति । येन हेतुना प्रतापेन वा मम वीरसघो—वीरसमूह· क्षणेन निहतो-विनाशित । सपर्वतानि—पर्वतेन सहितानि दुर्गाणि चाप्यधिकृतानि—स्वायत्तीकृतानि । साधारणमनुष्यसेनाया नैतत्कार्यमिति तदाशय ॥५॥

अथ अकबरसेनापति प्रतापस्य सच्चारित्र्य वर्णयति—**परस्त्रियमिति** । य प्रतापो मनसाऽपि परस्त्रिय न ईक्षते स एव दासीं कथं नु विधास्यते । एवंविध सच्चरित्र कथ नु दुश्चरित्र—दासीसंयमनादिकं कर्म कुर्यात् । तदेव दृष्टान्ते समर्थयति—स्वप्रभया-स्वकीयतेजसा चराचरं-जङ्गमस्थावरादिक सकलं ससारं प्रकाशयन् अर्यमा—सूर्य , तमस्ततिम्—अन्धकारपरपरा गाढान्धकारमित्यर्थ । न च नैव उत्पादयते, पुण्यात्मा प्रताप पापकर्म नैवाचरतीति भाव. ॥ ६ ॥

अक०—किमिदानीमेकलिङ्गेश्वरादलौकिकी शक्तिमापन्नोऽयम्?
सेना०—युक्तं संभाव्यते ।

न पक्षपातान्न रणाद्भिया वा वैराग्यतो वा न च बोधयामि ।
किं तु त्वदीयं कुशलं प्रपद्ये प्रतापतः प्रार्थनयैव सन्धेः ॥ ७॥

किञ्च—दैवीं महाशक्तिमसौ प्रपन्नो
विवर्द्धमानः किमिहापि यायात् ।
क्रुद्धः स चाक्रम्य तदाचरेद् य-
न्न वाच्यमेतत्परिभावनीयम् ॥ ८ ॥

मन्त्री—महाराज ! बाढमयमनिर्वचनीयां शक्तिमापन्नः । पश्य—

यः प्रत्यर्थिविराडरण्यदहने प्रोद्यद्दवाग्नीयते
यः क्रूरारिगजेन्द्रवृन्दहनने क्रुध्यन्मृगेन्द्रायते ।

---

अथ सेनापतिरकबरस्य प्रतापे आश्चर्यातिशयमवलोक्य सन्धि प्रस्तुते—**न पक्षपातादि**ति । अहं प्रतापे पक्षपातान्न बोधयामि, प्रतापस्य साहाय्यार्थं नैव कथयामीत्यर्थः । वा-अथवा रणात्सग्रामाद् भिया भयेन न बोधयामि । वा अथवा वैराग्यत सग्रामे हिंसाद्यवलोकनेन तदुपरामाद् न च नैव बोधयामि । किन्तु त्वदीय कुशल कल्याणं प्रतापत सन्धे प्रार्थनयैव प्रपद्ये-अवगच्छामि । एतत्त्वत्कल्याणार्थमेव सूचयामीत्यर्थ । बौद्धकृतापादानत्वविवक्षया प्रतापत इत्यत्र पञ्चमी ॥ ७ ॥

अथ सन्ध्यकरणे अनिष्ट दर्शयति—**दैवी**मिति । असौ प्रताप दैवी-लोकोत्तरा देवताप्रसादजन्या महाशक्तिं सहारादिकारिणी—महतीं शक्तिं प्रपन्न -प्राप्त विवर्द्धमान क्रमेण त्वदीयराज्यमाक्रामन्, किमिति वितर्के कदाचिदिहापि त्वन्नगरेऽपि यायात्प्राप्नुयात् । संभावनाया लिङ् । स च तदा तस्मिन्समये क्रुद्ध सन् आक्रम्य त्वय्युपरि आक्रमण विधाय यद् आचरेत् । 'जातुयदोर्लिङ्'इति लिङ् । एतन्न वाच्यम्, अमङ्गलत्वान्मया नैतदुच्यते, किन्तु परिभावनीयमेवैतत् । स चाक्रम्य त्वा हनिष्यतीति भाव ॥ ८ ॥

अथ मन्त्री तमेव सन्धिप्रस्तावं समर्थयितुं पूर्वं तत्प्रशसामाह—**य** इति । य

य: कौटिल्यकलातमिस्रहरणे भास्वत्प्रकाशायते
सोऽयं पूर्णबलः प्रतापविजय. शश्वद् विजृम्भायते॥९॥

किञ्च—

यस्ते राज्यमतित्रसत्पृथुवलं खड्गेन चाचीच्छिदत्
यस्ते वित्तमजीहरत् युवभटं सैन्यं तथाऽदीदरत्।
यस्ते भागमजीगलत्स धृतिमान् वीरः प्रतापस्त्वया
तूर्णं सन्धिवशेन शुद्धमनसा सप्रार्थनं शम्यताम्॥१०॥

अक०—यथा युवयोरनुमतिरिति (मसीं पत्र चानाय्य सन्धिपत्र लिखति। स्वकीयमुद्रयाङ्कितं विधाय स्वकीयेन विश्वस्तानुचरेण प्रतापसविधे प्रेषयति।)

(इति पत्रं गृहीत्वा स निष्क्रामति।) पटीक्षेप।

---

प्रताप प्रत्यर्थिनो-विपक्षा ये विराज-क्षत्रिया 'बाहुज क्षत्रियो विराड्' इत्यमर। ते-तव अरण्यानि—वनानि तेषा दहने सर्वथा नाशने प्रोद्यन्-देदीप्यमानो यो दवाग्निस्तद्वदिव आचरतीत्यर्थ, विपक्षक्षत्रियाणा नाशक। तथा क्रूरा—क्रूरप्रकृतिका ये अरय—शत्रवस्ते एव गजेन्द्रा—श्रेष्ठगजास्तेषा वृन्दस्य—समूहस्य हनने क्रुध्यन्—क्रोधयुक्तो यो मृगेन्द्र -सिंहस्तद्वदिव आचरतीत्यर्थ। तथा कौटिल्यस्य—कुटिलताया या कला सैव तमिस्रमन्धकारस्तस्य हरणे—दूरीकरणे, भास्वत —सूर्यस्य य प्रकाशस्तद्वदिवाचरति। यथा सूर्यप्रकाशे अन्धकारो नैव तिष्ठति एवमेवास्य समक्ष कौटिल्यकलाऽपि नैव तिष्ठतीत्यर्थ। स अयं प्रतापविजय. शश्वत्-निरन्तर विजृम्भते क्रमश वर्धते एवेत्यर्थ॥ ९॥

पुनस्तस्य शौर्यकार्य प्रदर्शयन् सन्धि समर्थयते—य इति। य प्रतापस्ते-तव राज्यम् अतित्रसत्—त्रस्त चकार। तथा पृथुबलं—बृहत्सैन्य खड्गेन अचीच्छिदत्—छेदयामास। अत्र 'वार्णादाङ्ग बलीय.' इति पूर्व दीर्घो लघोरिति दीर्घे ततस्तुकि अचीच्छिददिति। तथा यस्ते वित्त—धनम् अजीहरत्, स्वानुचरैर्हारयामास, तथा युवभट—युवानो भटा यस्मिंस्तद् युवभट—सैन्यम् अदीदरत्—दारयामास। तथा यस्ते भाग—राज्यांशम्, अजीगलत्—निगालया-

( इहोपत्यकाया कतिचित्स्वसामन्तसहित प्रताप सानन्दं परामृशति । )

( तत प्रविशति वीणा वादयन्ती प्रतापविजय गायन्ती योगिनी । )

**योगिनी—**

**हर हर जय जय देव !**
**जय प्रताप ! जय भारतभूषण जय वसुधाधिप ! देव !**
**हर हर जय जय देव !**
**जय जय धर्ममार्गपरिरक्षक ! जय मर्यादाभूप !**
**जय शिशोदियावंशविभूषण ! जय हरिहरप्रतिरूप !**
**हर हर जय जय देव !**
**जय यवनाधिपमानविमर्दक ! जय जय विजय महेश !**
**जय तुरुष्कसेनापतिमर्दक ! जय करवालसुरेश ! ॥ ११ ॥**

---

मास, स धृतिमान्—धैर्ययुक्तो वीर प्रतापस्त्वया तूर्ण—शीघ्रमेव शुद्धमनस शुद्धान्त करणेन, शुद्धमनसा त्वया इति वा सप्रार्थन यथा स्यात्तथा शम्यताम्। सन्धिद्वारा तस्योपशम कर्तव्य, अन्यथा ते कुशल नैव भविष्यतीति तदाशय ॥ १० ॥

**हर हरेति** । हरति—नाशयति संसारमिति हर, तत्सम्बुद्धौ। हे हर ! हरति—प्रापयति संपत्तिमिति हरस्तत्सम्बुद्धौ वा, हर ! वीप्साया वा द्वित्वम्। हे देव त्व जय जय—सर्वोत्कृष्टतया वर्तमानो भव । प्रतापपक्षे शत्रुसैन्यनाशकत्वात् हर इति । मित्राणामुत्तमपुरुषाणा वा सपत्तिप्रापकत्वाद्वा हरेति । जय प्रताप ! । भारतस्य भूषणम् अलकारकारत्वाद् भूषणस्वरूपम्। वसुधाया—पृथिव्या अधिप—प्रभुस्तत्संबुद्धौ । एतत्पर्यन्त ध्रुवपदम् । हे धर्ममार्गस्य—श्रौतस्मार्तधर्मप्रवर्तकस्याचारस्य परिरक्षक । जय जय—त्व सर्वोत्कृष्टतया वर्तमानो भव । मर्यादाया भूप—मर्यादाधिपतिस्तत्सबुद्धौ । हे शिशोदियावशस्य विभूषण ! शोभाकारक ! हे हरिहरप्रतिरूप !, विष्णुशिवसदृश !, पालनसंहारकारकत्वात्तयो सादृश्यम् । हे यवनाधिपस्य—अकबरस्य यो मानोऽभिमानस्तस्य विमर्दक—नाशक ! अथवा-यवनधिपस्य मानस्य—मानसिंहस्य च विमर्दक—विध्वसक ! जय-

(अत्रान्तरे प्रविशति शक्तिसिंह । योगिनी वीणा वादयन्ती मौनमास्थिता ।)

**शक्ति०—ससैनिकं समायान्तं शाहवाजं समुद्धतम् ।**
**विनिहत्य ससैन्यं तं शक्तिस्ते प्रणतः पदे ॥ १२ ॥**

**प्रता०—अहो भ्राता शक्तिसिंहः!** ( इति समुत्थाय तमालिङ्ग्य स्वसमीपे उपवेशयति । )

( पुनर्योगिनी गायति )

**हर हर जय जय देव !**
**जय प्रताप ! जय भारतभूषण ! जय वसुधाधिपदेव !**
**हर हर जय जय देव !**
**जय जय माननगरविध्वंसक ! जय राजकतारेश !**
**जय जय मानमानविच्छेदक ! जय मेवाडनरेश ! ॥ १३ ॥**

---

विजयनामकगणयोर्महेश प्रभो ! विष्णुरूप । अथवा विजयस्य महेश ! महाप्रभो !—सर्वदा विजयशालिन् ! जय जय—सर्वदा ते जयो भवतु । हे तुरुष्कसेनापते मानसिंहस्य वा शाहवाजस्य वा सलीमस्य वा परिमर्दक ! तत्तत्समयेषु परिमर्दनकारकत्वात् । सलीमो हल्दीघाटिकसघट्टे परिमर्दित , मानसिंहो माननगर ( आमेर ) लुण्टने चन्द्रेण परिमर्दित., शाहवाजश्च शक्तिसिंहेन परिमर्दित इति बोध्यम् । करवालस्य—खड्गस्य, सुरेश —इन्द्र सर्वथाधिपतिरित्यर्थ , तत्सम्बुद्धौ, जय जय ॥ ११ ॥

अथ गानमध्ये एव शक्तिसिंह प्रविशति । प्रणमन्सन् स्वकार्यमपि बोधयति—शक्ति —शक्तिसिंह. सैनिकै सहित—ससैनिकं, समायान्त—युद्धाय समागच्छन्त समुद्धतं महोद्भटं शाहवाजमेतन्नामकमकबरसेनापतिं ससैन्यं—सेनासहित तं विनिहत्य—मारयित्वा ते—तव पदे प्रणत , नमस्कार करोतीत्यर्थ. ॥ १२ ॥

असंभावितस्य भ्रातु प्राप्तेराश्चर्यरसाविष्ट· सन् प्रताप. कथयति—**अहो भ्राता शक्तिसिंहः ।**

अथ पुनर्योगिनी गायति—**हर हरेति** । हे माननगरस्य—आमेराख्यमानपुरस्य विध्वंसक ! जय जय—सर्वोत्कृष्टतया वर्तताम् । राजके—नृपतिगणे तारेश , चन्द्रसदृश , यथा तारागणे चन्द्रस्तथा नृपतिसमूहे भवान् । 'अथ राजकम् । राजन्यक च नृपतिक्षत्रियाणां गणे क्रमाद्' इत्यमर । तत्सम्बुद्धौ।

( तत प्रविशति माननगर ( आमेर ) विध्वंसक प्रतापसेनापति ।
योगिनी वीणा वादयन्ती मौनमास्थिता । )

**सेना०—असावामेरलुण्टाको मानगर्वविमर्दकः ।**
**तव सेनापतिश्चन्द्रो वन्दते त्वत्पदाम्बुजम् ॥ १४ ॥**

( इति पादौ प्रणमति । )

**प्रता०—साधु सेनापते ! साधु ।** ( इति तत्पृष्ठमास्फालयति, उपसन्निहित तमुपवेशयति )

( पुनर्योगिनी गायति )

**हर हर जय जय देव !**
**जय प्रताप ! जय भारतभूषण ! जय वसुधाधिप देव !**
**जय सन्धौ तुरुष्कसंप्रार्थित ! जय सच्चरितदिनेश !**
**जय नरपते! स्वतन्त्रधराधिप! जय जय जितयवनेश!॥१५॥**

( इति गायन्ती अन्तर्हिता । )

---

तथा हे मानस्य—मानसिंहस्य यो मानोऽभिमानस्तस्य विच्छेदक विघातक ! जय जय जय । हे मेवाडनरेश ! जय ॥ १३ ॥

तत प्रविशति माननगरविध्वसकश्चन्द्रावतसेनापति —**असौ** इति । आमेरस्य—आमेराख्यमाननगरस्य लुण्टाक , मानस्य—मानसिंहस्य यो गर्वोऽभिमानस्तस्य विमर्दक असौ प्रत्यक्षतया विद्यमानस्तव सेनापतिश्चन्द्र त्वत्पदाम्बुज वन्दते । चन्द्रस्य अम्बुज प्रति प्रणाम शत्रुत्वात्स्वापराधशमनार्थमेव । अय चन्द्र —चन्दावन्नाम्ना प्रसिद्ध पूर्वं मन्त्री आसीत्, इदानीं तु स एव सनापति । चन्दावत्शकावत्नाम्ना प्रसिद्धौ द्वावपि सामन्तौ स्त ॥ १४ ॥

अथ तत्कर्मणा प्रसन्न. प्रतापस्तत्पृष्ठमास्फालयति । स्वसमीपमेवोपवेशयति ।

पुनर्योगिनी गायति—**हर हर** इति। हे सन्धौ—सन्धिविषये तुरुष्केण संप्रार्थित! हे सच्चरितस्य—उत्तमचरित्राणा सदाचारस्य वा दिनेश—सूर्य, यथा सूर्यो घटपटादिपदार्थानां प्रकाशकस्तथाऽयमपि सदाचारस्य प्रवर्तक. प्रकाशकश्च, तत्सम्बुद्धौ । हे नरपते ! हे स्वतन्त्रा—पराधिकारशून्या या धरा—पृथ्वी

( तत प्रविशति सन्धिपत्रमादाय अकबरस्यानुचर । स च प्रतापपादयो-र्विनिपत्य अकबरस्य सन्धिपत्र समर्पयति । प्रतापस्तदुद्घाट्य सर्वान् श्रावयति । )

**श्रीमत्सु श्रौतस्मार्तधर्मरक्षकेषु गोब्राह्मणप्रतिपालकेष्वार्यपतिप्रतापेषु सप्रणयमसौ प्रार्थयते ।**

**स्वतन्त्राः सर्वतः सन्तो भवन्तो मम मानिन ।**
**पूज्याः सीमामनुल्लङ्घ्य शान्ति कुर्वन्तु विश्वतः ॥ १६ ॥**

इति भवदीय प्रियसुहृदकबर ।

**प्रता०—स्वीकृतस्ते सन्धिरिति म्लेच्छाधिपतिं संदिश** । ( तत सप्रणयमकबरस्यानुचरो निष्क्रान्त )

---

तस्या अधिप प्रभो !, जय । यद्वा—हे स्वतन्त्र ! पराधीनतारहित ! हे जितो यवनेशोऽकबरो येन स तत्सम्बुद्धौ, हे जितयवनेश । जय जय—सर्वोत्कृष्टतया वर्तताम् । इति गायन्ती योगाभ्यासबलादन्तर्हिता जाता ॥ १५ ॥

प्रताप सन्धिपत्र श्रावयति—**श्रीमत्सु** इत्यादि । श्री—सपल्लक्ष्मीर्विद्या वा तद्युक्तेषु, श्रौत—श्रुतिप्रतिपादितो वेदविहित , स्मार्त स्मृत्यादिप्रतिपादितस्सदाचारमूलको वा यो धर्मस्तस्य रक्षकेषु गो श्रुतिस्मृत्यादिरूपाया वाण्या. धेन्वा वा ब्राह्मणाना च प्रतिपालकेषु अध्ययनाध्यापनप्रोत्साहादिना भोजनवस्त्राच्छादनादिसाहाय्यदानेन वा परिरक्षकेषु 'ब्राह्मणार्थे गवार्थे वा सद्य प्राणान्परित्यजत्'इति स्मृत्यादिषु विधानात्प्राणपणेन तद्रक्षकेषु, आर्यपतिप्रतापेषु । आर्याणामधिपति प्रताप एव । स्वातन्त्र्येण तेषा सरक्षकत्वात् । असौ अकबर सप्रणयम्—अधीनतासहित यथा स्यात्तथा, प्रार्थयते—सन्धि याचते, न तु स्वातन्त्र्येण कथयतीत्यर्थः ।

किं प्रार्थयते इत्याह—**स्वतन्त्रा** इति । सन्त उत्तमा सदाचारसम्पन्ना भवन्त आदरणीया सर्वत सर्वतोभावेन स्वतन्त्रा , देशाधिकारशासनादिसर्वकार्येषु स्वाधिपत्ययुक्ता , न च युष्माक राज्ये करग्रहणस्पृहा वय करिष्याम , नापि युष्माक शासनप्रबन्धे किञ्चिदपि हस्तक्षेप विधास्याम सर्वमेतत्'सर्वत 'इति पदेन व्यज्यते। तथा भवन्तो मम मानिन। यदि किञ्चिदप्यस्माकमनौचित्यं भवन्तो बोधयिष्यन्ति तत्त्वरितमेव निवर्तयिष्याम ।

**गुहः—अच्चरियम्! अच्चरियम्!। एगलिङ्गप्पहावेण अम्हाणं**
आश्चर्यम् ! आश्चर्यम् !। एकलिङ्गप्रभावेणास्माक
**पहुणो सव्वोऽवि मणोरहो जुगवदेव्व संपुण्णो जाओ।**
प्रभो सर्वोऽपि मनोरथो युगपदेव संपूर्णो जात ।
**आमेरं माणणअरं विलुण्ठिय माणसीहगव्वो वि-**
आमेर माननगर विलुण्ठ्य मानसिंहगर्वो वि-
**चुण्णिओ। आक्कमणमहिलसन्ती सव्वा चेव अगवर-**
चूर्णित । आक्रमणमभिलषन्ती सर्वा एव अकबर-
**सेणा नासिआ। अच्चरियं! अच्चरियं! अगवरो अ मानं**
सेना नाशिता । आश्चर्यम् ! आश्चर्यम् ! अकबरश्च मान
**चइत्ता अम्हाणं पहुणो पदावस्स चरणम्मि निवडिओ।**
त्यक्त्वाऽस्माक प्रभो प्रतापस्य चरणे निपतित ।

**शक्ति०—अहो अस्या योगिन्या वाचि अनिर्वचनीया शक्तिः विद्युदिव सर्वतो धमनीषु शौर्यौदार्यशक्ति संचारयति, त्वयि च परमां भक्तिमुत्पादयति।**

---

अपि च भवन्त पूज्या अस्माक सर्वतोभावेन आदरणीया क्षत्रियत्वेन पूजार्हा वा । सीमा—स्वकीयसीमान यावत्पर्यन्तमिदानीं भवतामधिकारोऽस्ति ता सीमाम्। 'सीमसीमे स्त्रियामुभे' इत्यमर । अनुल्लङ्घ्य स्वसीमायामेव स्थित सन् विश्वत 'सप्तम्यर्थे तसि.' विश्वस्मिन् सर्वत्र शान्तिं कुर्वन्तु। शान्तिकरण त्वदधीनमेवेति सन्धिं प्रार्थयते । तेन शान्तिर्भविष्यतीति भाव । इति एतत्प्रार्थयते भवदीय प्रिय श्रेष्ठ सुहृद् 'सुहृद्दुर्हृदौ मित्रामित्रयो.' इति हृदयशब्दस्य मित्रेऽर्थे हृदित्यादेश । प्रियमित्रमित्यर्थ ॥ १६ ॥

अथ गुहो भिल्लराजो युगपत्सर्वविधकार्यसिद्धिमालोक्य आश्चर्यरसाविष्ट कथयति—**आश्चर्यमि**त्यादि । किं तत्कार्यमिति दर्शयति—आमेरनगरलुण्ठनेन मानसिंहगर्वविमर्दनमसभावितमिवासीत्तदपि एकलिङ्गप्रभावेण जातम्। प्रलयकालीनसमुद्र इवायान्ती अकबरसेना शक्तिसिंहेन क्षणमात्रेणैव नाशिता। अहो आश्चर्यकरमिद महत्कार्यं जातम् । यदयमकबरो मान—स्वाभिमान

प्रता०—एवमेवैतत् । सेयं तपोबलेनेमां शक्तिमापन्ना ।

( तत प्रविशति कमण्डलुहस्त समित्पाणिः स्वशिष्यसहित कश्चि-त्तपस्वी । )

(सर्वे प्रणमन्ति ।)

तपस्वी—प्रताप ! साधु त्वयाऽऽर्यमर्यादा रक्षिता । म्लेच्छ-राजश्च नम्रीकृतः ।

आज्ञा सर्वशिरोमणिप्रणयिनी भक्तिश्च ते शङ्करे
सौजन्यं परमं सुतः प्रणयवान् कान्ता मनोहारिणी ।
राज्यं सन्निरुपद्रवं प्रकृतयो गाढानुरक्तास्त्वयि
स्तोत्रं सिन्धुपरात्परं किमपरं भूयः प्रियं कुर्महे ॥ १७ ॥

---

मानसिंहं वा त्यक्त्वा अस्माक प्रभो. । एतेन स्वस्यापि कार्यसिद्धि सूचिता भवति । अन्यत्सुगमम् ।

**सेय**मिति । या जात्या नटजातिविशिष्टा आसीत्सैवेयम् । तपसो बलेन इमा शक्तिमापन्नेति तपश्चर्यादिना शक्तिसपादनेऽपि नास्मिन्नेव जन्मनि जाते परावर्तन भवतीति सूच्यते ।

समायातस्तपस्वी प्रतापमुद्दिश्य कथयति—**आज्ञा** इति। ते तव आज्ञा सर्वेषा शिरामणिषु प्रणयिनी सनिवेशिनी । 'सघाते सन्निवेशे च सस्त्याय प्रणया-स्त्वमी' इत्यमर । सर्वैर्नम्रीभूय शिरोभिस्तवाज्ञा ध्रियते इति भाव । ते भक्ति शङ्करे-महादेवे। नैतेन आराध्यदेवताया विज्ञापनस्यावसर इति बोध्यते। ते सौजन्यं परमम्-अत्युत्तमम् । तव सुत -पुत्रश्च प्रणयवान्–विनयवान् नम्र-स्वभावो वा । तव कान्ता-भार्या मनोहारिणी—भवन्मनोऽनुकूला । सत्-उत्तम तव राज्य निरुपद्रवम् । प्रजाविद्रोहादिदोषरहितम् । तव प्रकृतयोऽमात्या-दय पौरा वा त्वयि गाढानुरक्ता नितान्तमनुरक्ता । तव स्तोत्र-स्तुति सिन्धो -समुद्रस्य परादपि परमस्ति, भूय अपरं किं ते प्रिय कुर्महे । सर्व-मपि तवाभिमतं परिपूर्णमेवास्ति । तथापि त्वयि सर्वसंपत्तिप्राप्तावपि भावि-फलप्राप्त्यर्थमाशी ॥ १७ ॥

तथापि इदं भरतवाक्यमस्तु—

सर्वे सत्पथगामिनः शिवरताः स्वातन्त्र्यदेवप्रियाः
ब्रह्मण्या निजधर्मकर्मकुशला राष्ट्रानुगा मानिनः।
विद्वांस स्वकदारमात्रनिरता दक्षा दृढप्रत्यया
भूयासुर्वसुधाधिपा नयविदः पुण्ये पुनर्भारते ॥ १८॥

( इति भूय पठति । श्लोकसमाप्तिसमनन्तरमेव पटीक्षेप )

इति श्रीविद्यावारिधिसर्वतन्त्रस्वतन्त्रमहामहोपाध्यायमथुराप्रसाद-दीक्षितकृतौ वीरप्रतापनाटके सप्तमोऽङ्क समाप्त ।

समाप्त चेद नाटकम् ।

---

**सर्वे** इति। सर्वे सत्पथगामिनो भूयासु । शिवे—कल्याणे, आत्मनो लोकस्य वा कल्याणे रता। यद्वा शिवे-शङ्करोपासनाया रतास्तत्परा । तथा स्वातन्त्र्यस्य स्वतन्त्रतायाम् अधिष्ठायको यो देव स प्रियो येषा ते तथा। यद्वा-स्वातन्त्र्यं च देवश्च देवो विष्णु शिवो वा। स्वातन्त्र्यदेवौ। तौ प्रियौ येषा ते तथा। 'वा प्रियस्य' इति प्रियशब्दस्य परनिपात । यद्वा-स्वातन्त्र्ये देव-प्रिया । देवाना प्रिया देवप्रिया । देवाना प्रिय इति तु मूर्खे । अन्यत्र देवप्रिया। ब्रह्मण्या ब्रह्मभक्ता । निजे—आत्मीये ये धर्मकर्मणी तत्र कुशला. । राष्ट्रस्य अनुगा । मानिन —मानयुक्ता नत्वभिमानशून्या । विद्वास पण्डिता सदसद्विवेकवेत्तार । स्वकदारमात्रे निरता स्वदार-सतुष्टा इत्यर्थ । दक्षा –कार्यकुशला । दृढ प्रत्यय स्वधर्मे विश्वासो येषा ते तथा । नयविद —नीतिनिपुणा समयानुकूल्येन राष्ट्रसेवाकारका, वसुधा-धिपा —वसुधाया सर्वविधसमृद्धिसपूरिताया भारतभूमेरधिपा प्रभवो राजान पुण्ये—पवित्रे भारते पुन भूयासु । पवित्रे भारते भूय. पूर्वोक्तगुणविशिष्टा राजानो भवन्त्विति तात्पर्यार्थ ॥ १८ ॥

यत्तु ग्रन्थसमाप्तावपि अङ्कसमाप्तौ 'निष्क्रान्ता सर्वे' इति 'अन्त-निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तित ' इति विश्वनाथवचसा निष्क्रामण कारयन्ति, तन्नातितरा रोचते । निष्क्रमणानन्तर शून्यस्थानावलोकनेन सामाजिकाना वैरस्य स्यात् ।

इति श्रीमन्महामहोपाध्यायमथुराप्रसाददीक्षितविरचितायां वैजयन्ती-
टीकायां सप्तमोऽङ्कः ।

## समाप्ता चेयं वैजयन्ती ।

## अथ टीकाकर्तुः परिचयः—

शताब्द्यां षोडशीयायां शिवराजपुराधिपे ।
चिकीर्षितं विष्णुयागं श्रीकान्तो द्रष्टुमाययौ ॥१॥
यज्ञे यज्ञाग्निनीतौ विकलतरलितान्मानुषान्प्रेक्ष्य धीरः
प्रोवाचेत्थं त्वयैवं किमिह विधिविधौ बाह्यवह्नेर्विधेयम् ।
आक्षिप्तस्तर्हि कार्यस्तव यदि महिमाऽभ्यन्तराग्निप्रसूतौ
हुं कृत्वा मन्त्रशक्त्याऽनिलमधियजनं दीप्तिमन्तं निनाय ॥२॥
अथ विदुषामनुरोधाद्राज्ञश्चाप्यनुनयादचीकरत ।
यज्ञं स्वयं च कृतवान् दीक्षितपदवीं ततः प्राप्तः ॥ ३ ॥
अद्वितीयमहिमा स बभूव कान्यकुब्जवरभूसुरमध्ये ।
तोषितः स्वकृतितो वरवर्णी सोऽपि चाशिषमदत्त ततोऽस्मै॥४॥
भवत्कुले तिष्ठतु सर्वदा सती सरस्वती साधुपदा दृढास्पदा।
विहाय वैरं गिरया च शाश्वतं न जातु पद्मा विजहातु ते कुलम् ५॥
भास्वद्भूरिप्रतापः सकलबुधगणेष्वग्रणीर्भूरिकीर्ती
राज्ञां मान्यो वरेण्यो हरिहरचरणस्तस्य वंशेऽजनिष्ट ।
तत्पुत्राः पञ्च जाता निगमनयविदस्ते च विद्वत्सु पूज्याः
सर्वे सिद्धान्तविज्ञाश्चरकविधिबुधा वैद्यवर्या बभूवुः ॥ ६ ॥
सकलमहीसुरमण्डनवर्यः शास्त्रार्थमर्मज्ञः ।
बदरीनाथो धीरो हरिहरपुत्रो भिषग्वरो जातः ॥ ७ ॥
तदात्मजोऽहं मथुराप्रसादः सुधियां मतः ।
तस्य मे विदुषां स्वान्ते कृतिर्विजयतामियम् ॥ ८ ॥
वह्न्यङ्कनवचन्द्रेऽब्दे बघाटे निर्मिता बुधे ।
प्रौष्ठपद्यां वैजयन्ती दुर्गासिंहे प्रशासति ॥ ९ ॥

त्वर्यताम् ! त्वर्यताम् !! त्वर्यताम् !!!

अल्पीयसो मूल्यस्य पराकाष्ठा

## श्रीमद्वासुदेवदीक्षित-विदुषा विरचितया

बालमनोरमाव्याख्योपेतायाः

# वैयाकरणसिद्धान्तकौमुद्याः

## सटिप्पणं सुपरिष्कृतं शुद्धतमं विशिष्टं संस्करणम्

श्रीमद्भट्टोजीदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुदी श्रीमद्वासुदेवदीक्षितविदुषा विरचितया सुप्रथितया बालमनोरमाख्यया व्याख्यया, स्वरवैदिकीभागे श्रीमज्जयकृष्णकृतया सुबोधिन्या, लिङ्गानुशासने भैरवीव्याख्यया च समलङ्कृता धातुसूत्रगणोणादिपाठशिक्षावार्तिकादिपरिशिष्टैश्च संवलिता मुद्रिता राजते । सा चेयं लवपुरीयप्राच्यमहाविद्यालयप्रधानाध्यापकैर्महामहोपाध्यायश्रीमन्माधवशास्त्रिभण्डारिमहोदयैरपूर्वाभिष्टिप्पणीभिर्विभूषिता लेखकादिपरम्परागतान् दोषानपाकृत्य सम्यक् परिष्कृत्य च संशोधिता ।

## अत्र च टिप्पणीषु निम्नलिखिता अन्यत्र दुर्लभा विषया उपलभ्येरन् ।

१–कानि कानि वार्तिकानि पाणिनीयगणपाठसिद्धानि, कियन्ति सौत्रनिर्देशसिद्धानि कियन्ति च पाणिनितोऽपि प्राचीनेन शाकटायनमहर्षिणा प्रणीतात् ऋक्तन्त्रव्याकरणादुद्धृतानीत्यादिरीत्या प्रायशो वार्तिकानामपूर्वत्वाभाव । २–सूत्रेषु उदाहरणेषु वा समुल्लिखिताना देशाना नदीना च साप्रत व्यावहारिकाणि कानि नामानि, क्व वा तेषा सनिवेश , किं वा

वैशिष्ट्यमित्यादिप्रकाराणा स्पष्टीकरणम् । ३–यवक्रीताद्याख्यानाना संक्षिप्तं स्वरूपप्रदर्शनम् । ४–भट्टोजीदीक्षितैस्तत्र तत्र समुद्धृताना श्लोकादीना मूलभूतग्रन्थसर्गाध्यायश्लोकसख्यादीना निर्देशा । ५–तत्र तत्र कारकादिप्रकरणे शब्दशक्तिप्रकाशिकादौ श्रीजगदीशभट्टाचार्यप्रभृतिभि विचारिताना विशेषविषयाणा समुल्लेख । ६–अन्याश्च महत्त्वपूर्णा गवेषणाष्टिप्पणीरूपेण प्रदर्शिता ।

किं च श्रीमता सर्वतन्त्रापरतन्त्रेण श्रीवासुदेवदीक्षितविदुषा विरचिताया महाभाष्यसारसर्वस्व ख्यापयन्त्या तत्त्वबोधिनीशब्देन्दुशेखरादिसंगृहीतविषयाणा स्वस्मिन्नन्तर्भाव सपादयन्त्या सरलतया किमप्यवर्णनीय महत्त्वमावहन्त्या बालमनोरमाटीकाया त्रिचनापल्लीनगरे मुद्रापिताया यत्र तत्र लेखकादिप्रमादाद्ये सहस्रशो दोषा आसन्, यै कीटानुविद्ध रत्नमिव सा टीकाऽनुपादेयत्वमभजत, तेषा सर्वेषा दोषाणा सर्वथा दूरीकरणेन टीकाया अपि जीर्णोद्धार इव निर्दिष्टपण्डितवर्यै संपादितोऽत्र लक्ष्यते ।

**तदेषा सर्वाङ्गसुन्दरा द्विसहस्र (२०००) पृष्ठपरमिता सुचिक्कणपत्रेषु निर्णयसागरीयायसाक्षरैर्मुद्रिता पटवेष्टकवेष्टितासर्वसामग्रीसम्भूतापि केवलं प्रचारभावमवलम्ब्याष्टाभी ८) रूप्यकैर्वितीर्यते विद्यार्थिभ्यश्च पञ्चभिरेव ५) रूप्यकैर्दीयते इति भूयान् हर्षः ।**

**ग्राहकमहाशया सप्रश्रयं प्रार्थ्यन्ते यदनर्घस्यास्य ग्रन्थरत्नस्य वराटकमूल्यं विभाव्य दैनंदिनं विक्रयमत्यधिकं वर्तते । तद्भवद्भिर्द्वितीयावृत्तिर्यथा न प्रतीक्ष्या तथाऽविलम्बं त्वर्यताम् । ग्राहकसौकर्याय भागशोऽर्द्धेन सार्द्धरूप्यकद्वयेनापि विक्रीयते । सिद्धान्तकौमुद्या भागद्वयस्य भार. प्रस्थत्रयम्, पुस्तकप्राप्त्यर्थं पत्रलेखनसमये रेलवेस्टेशनसङ्केतोऽवश्यं देयः ।**

## अस्य संस्करणस्यानवद्यत्वे प्रमाणभूता विदुषां सम्मतयश्च—

वासुदेवदीक्षितविरचितया बालमनोरमाव्याख्यया समुपेतेयं सिद्धान्तकौमुदी श्री म० म० पण्डितमाधवशास्त्रिभाण्डारिमहोदयै सस्कृता

श्रीमन्मोतीलालबनारसीदासमहोदयैश्च प्रकाशितेति महानयं हर्षावकाशः। पुरा दक्षिणभारते प्रकाशितायां बालमनोरमायां ये केचन दोषास्सन्ति ते सर्वेऽप्यस्मिन् संस्करणेऽपाकृताः। अत्र टिप्पण्यां निदर्शिता गवेषणाश्च महत्त्वपूर्णास्सन्ति। आशासे संस्करणमिदमध्येतॄणां मध्ये महतीं ख्यातिं लप्स्यत इति।

**म० म० स० कुप्पुस्वामी शास्त्री विद्यावाचस्पतिः, कुलपतिः, दर्शनकलानिधिः, प्रे० का० मद्रास**

बालमनोरमायाः संस्करणमिदं दक्षिणभारते मुद्रापितायाः बालमनोरमायाः अपेक्षया सुविशुद्धतरम्। लेखकादिप्रमादाद्ये केचनात्र दोषा आसन् ते ब्रह्मश्रीमहामहोपाध्यायमाधवशास्त्रिभाण्डारिभिस्सम्पादकैर्दूरीकृता इति नितरां प्रसीदति नः चेतः। शास्त्रिमहोदयकृताभिष्टिप्पणीभिश्चास्य संस्करणस्यापूर्वतैव। स्वल्पेनैव मूल्येन चास्य संस्करणस्योपलब्धिरित्यध्यापकाध्येतॄणां मध्ये भूयानस्य प्रचारः संभाव्यते।

**म० म० गोपीनाथकविराजः प्रिंसिपल ग० सं० का० बनारस।**

प्राप्तिस्थानम्—

**मोतीलाल बनारसीदास**

**पञ्जाब संस्कृत पुस्तकालय**

**सैदमिट्ठा बाज़ार, लाहौर।**